॥२९॥ एतानन्यांश्च दिवसान्स्मृत्युक्तांश्च परित्यजेत् ॥३०॥ इति ॥ पुरश्चरणकालः रुद्रयामले ॥ वैशाखे श्रावणे वापि आश्विने कार्त्तिके तथा ॥ फाल्गुने मार्गशीर्षे वा मंत्री कुर्यात्पुरस्क्रियाम् ॥३१॥ तिथ्यादिनिर्णयः चंद्रिकायाम् ॥ पूर्णिमा पंचमी चैव द्वितीया सप्तमी तथा ॥ त्रयोदशी च दशमी प्रशस्ता सर्वकर्मसु ॥३२॥ इति ॥ रुद्रयामले ॥ गुरुशुक्रोदये शुद्धे लग्ने सद्वारशोधिते ॥ चंद्रतारानुकूल्ये च शुक्लपक्षे विशेषतः ॥ पुरश्चरणक कुर्यान्मंत्रसिद्धिः प्रजायते ॥३३॥ इति ॥ जपस्थानानि नारदीये ॥ शिवस्य संनिधाने च सूर्याग्न्योर्वा गुरोरपि ॥ दीपस्य ज्वलितस्यापि जपकर्म प्रशस्यते ॥३४॥ गृहे जपं समं विद्याद्गोष्ठे शतगुणं भवेत् ॥ नद्यां शतसहस्रं स्यादनंतं शिवसन्निधौ ॥३५॥ समुद्रतीरे च ह्रदे गिरौ देवालयेषु च ॥ पुण्याश्रमेषु सर्वेषु जपः कोटिगुणो भवेत् ॥३६॥ इत्युक्तस्थानानामन्यतमं स्थानमाश्रित्य दीपस्थानं विचिंतयेत् ॥ तद्यथा ॥ कूर्मस्यैव मुखं विद्धि दीपस्थानं सुसिद्धिदम् ॥ चतुरस्रं भुवं भित्त्वा कोष्ठानां नवकं लिखेत् ॥३७॥ पूर्वकोष्ठादि विलिखेत्सप्तवर्गान्यनुक्रमात् ॥ लक्षावीशे मध्यकोष्ठे स्वरान्युग्मक्रमाल्लिखेत् ॥३८॥ दिक्षु पूर्वोदितो यत्र नामस्याद्याक्षरं भवेत् । मुखं तदाऽस्य जानीयाद्धस्तावु-भयतः स्थितौ ॥३९॥ पृष्ठं कुक्षी उभे पादौ द्वौ शीर्ष्णि पुच्छमीरितम् ॥ कूर्मचक्रामिदं प्रोक्तं मंत्राणां सिद्धि-साधनम् ॥४०॥ इति ॥ कुरुक्षेत्रे प्रयागे च गंगासागर-संगमे ॥ महाकाले च काश्यां च कूर्मस्थानं न चिन्तयेत् ॥४१॥ इति ॥ अथासनानि शारदायाम् ॥ कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि ॥ स्यात्पौष्टिकं च कौशेयं शांतिकं वेत्रविष्टरम् ॥४२॥ वंशासने व्याधिनाशः कंबले दुःखमोचनम् ॥ सर्वाभावे त्वासनार्थं कुशविष्टरमिष्यते ॥४३॥ इति ॥ जपमाला तत्रैव ॥ रुद्राक्षश्वएतपद्माक्षमाले तु अखिले जपेत् ॥ अतिस्थूलोऽतिसूक्ष्मश्च स्फुटितो भंगुरिर्लघुः ॥४४॥ भिन्नः पुरा धृतो जीर्णो रुद्राक्षो वरदः स्मृतः ॥ अष्टोत्तरशतैर्माला प्रशस्ता सर्वकर्मसु ॥४५॥ गुरुं प्रकाशयेद्धीमान्मंत्रं नैव प्रकाशयेत् ॥ अथ मालां च मुद्रां च गुरोरपि न दर्शयेत् ॥४६॥ इति ॥ मालासंस्कारस्तत्रैव ॥ क्षालयेत्पंचगव्येन सद्योजातेन तज्जलैः ॥ चंदनागरुगंधाद्यैर्वामदेवेन घर्षयेत् ॥४७॥ धूपयेत्तामघोरेण लेपयेत्पुरुषेण तु ॥ मंत्रयेत्पंचमेनैव प्रत्येकं तु शतं शतम् ॥४८॥ मेरुं च पंचमेनैव तथा मंत्रेण मंत्रयेत् ॥ येन प्रतिष्ठिता माला तमेव तु मनुं जपेत् ॥४९॥ इति ॥ जपप्रकारः विश्वामित्रकल्पे ॥ ॐकारं पूर्वमुच्चार्य भूर्भुवः स्वस्तथैव च ॥ गायत्रीं प्रणवांतां च मध्ये त्रिप्रणवां तथा ॥५०॥ एवं नित्यं जपं कुर्याद्ब्राह्मणो विप्रपुंगवः ॥ भिन्नापादा तु गायत्री ब्रह्महत्याप्रणाशिनी ॥५१॥ अभिन्नपादा गायत्रीब्रह्महत्यां प्रयच्छति ॥ अच्छिन्नपादगायत्रीजपं कुर्वंति ये द्विजाः ॥५२॥ अधोमुखाश्च तिष्ठंति कल्पकोटिशतानि च ॥ धर्मशास्त्रपुराणेषु इतिहासेषु सुव्रत ॥५३॥ पंचप्रणव-संयुक्तां जपेदित्यनुशासनम् ॥ जपसंख्याष्टभागान्ते पादो जाप्यस्तुरीयकः ॥५४॥ स द्विजः परमो ज्ञेयः परं सायुज्यमाप्नुयात् ॥ अन्यथा प्रजपेद्यस्तु स जपो विफलो भवेत् ॥५५॥ प्रारंभदिन मारभ्य समाप्ति-दिवसावधि ॥ न न्यूनं नातिरिक्तं च जपं कुर्याद् दिनेदिने ॥५६॥ नैरंतर्येण कुर्वीत स्वस्ववृत्तिं न लिंपयेत् ॥ प्रातरारभ्य विधिवज्जपेन्मध्यंदिनावधि ॥५७॥ मनःसंहरणं शौचं यानं मंत्रार्थचिंतनम् ॥५८॥ इति ॥ जपसंख्या तत्रैव ॥ गायत्रीछन्दोमंत्रस्य यथासंख्याक्षराणि च ॥ तावल्लक्षाणि कर्त्तव्यं पुरश्चरणकं तथा ॥५९॥ इति ॥ प्रपंचसारेऽपि ॥ एवं कृत्वा तु सिद्ध्यर्थं गायत्रीं दीक्षितो जपेत् ॥ तत्तलक्षं विधानेन भिक्षाशी विजितेंद्रियः ॥६०॥ इति ॥ होमद्रव्याणि तत्संख्या च शारदायाम् ॥ क्षीरोदनं तिला दूर्वाः क्षीरद्रुमसमिद्वरान् ॥ पृथक्सहस्रत्रितयं जुहुयान्मंत्रसिद्ध्ये ॥६१॥ इति ॥ विश्वामित्रोऽपि ॥ तिलैः पत्रैः प्रसूनैश्च यवैश्च मधुना प्लुतैः ॥ कुर्याद्दशांशतो होमं ततः सिद्धो भवेन्मनुः ॥६२॥ इति ॥ अत्र दशांशतस्तर्पणं दशांशहोम इत्यर्थः ॥ होमात्पूर्वं तर्पणस्योक्तत्वात् ॥ होमार्थं मंडप कुंडादिनिर्णयस्तद्रचना प्रकारश्च तत्तदग्रंथेभ्योऽवगंतव्यः ॥ विस्तरभयान्नेह लिखितः ॥

॥ इति श्रीगायत्रेपुरशरणविधिः समाप्तः ॥

# श्रीगायत्र्यपराधक्षमापनस्तोत्रम्

॥ श्रीगणेशाय नमः ॥

जगन्मातर्मातः सुकृतसुचयैः पूर्वजनितै, र्द्विजातौ मे भाग्यान्निवसतिरभून्मातुरुदरे ॥ न किंचिज्जातं ते स्मरणमपि भे तत्र जननि, क्षमस्वेमं मातः परममपराधं भगवति ॥१॥

जनौ जात्यां बाल्ये विविधपरिपीडाकुलतया, कृतं नो मूढत्वाद् भगवति तवाराधनमपि ॥ द्विजत्वे ते भक्तिर्न च विहितकर्मण्यपि कृता, क्षमस्वेमं मातः परममपराधं भगवति ॥२॥

युवाऽहं सौख्यानामतिमदभराकुण्ठितधिया, न चाकार्षङ्किंचिद् भजनमपि मातर्यमभिया ॥ कथं वार्धक्ये त्वच्चरणयुगधीर्मे हि भविता, क्षमस्वेमं मातः परममपराधं भगवति ॥३॥

न जाने ते ध्यानं न च जननि चावाहनमथो, प्रतिष्ठां नो जाने न च मृदु समर्घ्यासनमहो ॥ न पाद्यं ते दत्तं न च फलयुतं चार्घ्यमपरं, क्षमस्वेमं मातः परममपराधं भगवति ॥४॥

न वाऽऽचामार्थं तेऽर्पितमपि क्वचिद् वारि मधुरं, न च स्नानं दुग्धैर्दधिघृतसिताभिः समधुभिः ॥ न गन्धैर्वा तैलै रचितमपि संशुद्धसलिलैः, क्षमस्वेमं मातः परममपराधं भगवति ॥५॥

न वस्त्रालंकारा न च मलयगन्धाक्षतयुताः, प्रदत्ता नो मातस्तव शिरसि मे पुष्पनिचयाः ॥ न कण्ठे माला ते न सविधि तवाङ्गार्चनमहो, क्षमस्वेमं मातः परममपराधं भगवति ॥६॥

न चोक्ता ते पूजाऽऽवरणविधिना देवि सुकृता, न दत्तं सौभाग्यं न च सुरभिधूपश्च परमः ॥ न दीपो नैवेद्यं विधिधमथवा नापि सलिलं, क्षमस्वेमं मातः परमषराधं भगवति ॥७॥

मुखे ते ताम्बूलं मृगमदयुतैलादिसहितं, न दत्तं सौवर्णं प्रचुरतरदाक्षिण्यमतुलम् ॥ न चारार्तिक्यं ते कृतमपि च कर्पूरसहितं, क्षमस्वेमं मातः परममपराधं भगवति ॥८॥

न मातस्ते पुष्पाञ्जलिरपि धृतो पादयुगले, कृतं प्रादक्षिण्यं विहितमपि ते नोऽम्ब हि मया ॥ विशेषार्घो दत्तो न च कृतमपि स्तोत्रमथवा, क्षमस्वेमं मातः परमममपराधं भगवति ॥९॥

नमस्कारैरम्ब क्वचिदपि नतिर्नैव विहिता, कृतो मातश्चैवं समयविहितो नार्चनविधिः ॥ प्रमादो वा मादो किमपि ह ममैवास्तु जडता, क्षमस्वेमं मातः परममपराधं भगवति ॥१०॥

त्वमेवासि ब्रह्मा त्वमसि हरिरुद्रौ च जननि !, त्वमिन्द्रस्त्वं चाग्नि स्त्वमसि यमरक्षःपवरुणाः ॥ मरुत्त्वं श्रीदेशौ त्वमसि सकलं सूक्ष्मसहितं, कथं ते माहात्म्यं कथयुतुमु शक्नोमि सुभगे ॥११॥

न सौख्यं चाकाङ्क्षे क्वचिदपि च कस्यापि सुतरां, परे वा लोकेऽस्मिन् विषयजमहो मृत्युजनिदम् ॥ सदाऽऽकाङ्क्षे देवि ! द्विजकुलजनेर्मे सफलतां, परं सा तेऽधीना कुरु रुचिकरं वच्मि किमहम् ॥१२॥

वरेण्यं त्वं तेजः सवितुरथ देवस्य सुमहद्, धियो यो नो नित्यं प्रणुदति च सत्कर्मसु सदा ॥ यदेव ध्यायन्तः परमगतिमोक्षं जनिभृतो विशन्ति त्वद्रूपं वद किमिदमाश्चर्यमनघे ॥१३॥

द्विजानां गायत्री परमसमुपास्या भगवति, यदेवं ब्रह्मापि त्वमसि परमं प्राप्यमनिशम् ॥ शरण्यां त्वां त्यक्त्वा जगति महतीं मातरमहो, अये ! गच्छामि त्वं कथय किमिहान्यच्छरणदम् ॥१४॥

पूजा क्वचिन्न विहिता विधिना मया ते, सोत्रं कृतं न च तथा मधुरैर्वचोभिः ॥ मातस्तथापि मयि संकुरुषे कृपां त्व, मेष प्रकृष्टमहिमा जगदम्बिके ते ॥१५॥

संसारदुःखपरमब्धिनिमज्जितोऽहं, त्वं तारिणी भगवती सकलद्विजानाम् ॥ गायत्रि देवि दयया शरणार्थिनं मां, पुत्रं समुद्धर मुहुः प्रणमामि चाम्ब ॥१६॥

श्रीगायत्र्यम्बिका देवी स्तोत्रेणानेन सर्वशः । क्षान्वा दोषान् प्रसन्ना स्तात् कुर्याच्छ्रेयो निरंतरम् ॥१७॥

॥ इतिश्रीगायत्र्यपराधक्षमापरस्तोत्रं संपूर्णम् ॥

# श्रीगायत्रीकल्प

अथ विश्वामित्रकृत श्रीगायत्रीकल्पः

श्रीगणेशाय नमः ॥ अथ विश्वामित्रकृतगायत्रीकल्पप्रारंभः ॥ स्वगुरुं पूजयेन्नित्य मुपचारैस्त पंचकैः ॥ भक्तिश्रद्धानुसारेण विश्वामित्रं प्रकल्पयेत् ॥१॥ अस्य कृत्स्नस्य मंत्रस्य प्राणायामं निरुंधयेत् ॥ प्राणायामं नियम्याशु गुरुपूजापुरःसरम् ॥२॥ प्रातरुत्थाय यो विप्रं शयने पर्यवस्थितः ॥ एकाग्रमानसो भूत्वा ध्यायेन्मूलेऽथ कुंडलीम् ॥३॥ नाभिसंनिहिता ज्ञेया द्वात्रिंशद्वर्णसंख्यया । एवं ज्ञात्वा प्रभातायां षडाधारं तथा न्यसेत् ॥४॥ षडाधारं तथा वक्ष्ये विन्यसेच्चतुरक्षरम् ॥ आद्यंतप्रण वैर्युक्तं षट्कुक्षिस्तु ततो न्यसेत् ॥५॥ सहस्रदलमध्यस्थां सबालां सतुरीयके ॥ हंसहंसेति विज्ञानात् सर्वपापैः प्रमुच्यते ॥६॥ अथोत्थाय बहिर्गम्य मलमूत्रविसर्जनम् ॥७॥ दुर्गंधत्यागपर्यन्तं कृत्वा शौचं समाहितः ॥ ततो नदीं समागत्य गंगाध्यानपुरःसरम् ॥८॥ आचमनत्रयं कृत्वा त्रिवारं स्नानमाचरेत् ॥ अग्निमंडलमालिख्य जलमध्ये सबिंदुकम् ॥ मायाबीजेन मध्यस्थमुभयोर्व्याहृतित्रयम् ॥९॥ ततः शुद्धांबुनाऽऽचम्य प्राणायामत्रयं कुरु ॥ देशकालार्थमुच्चार्य्य गायत्रीध्यानपूर्वकम् ॥१०॥ सूक्ताग्निमार्जनं कुर्याद्यथाशाखोक्तमार्गतः ॥ अघमर्षणमंत्रं च स्नानं पंचांगपूर्वकम् ॥११॥ श्रोत्रे नासाक्षि रुद्ध्वा च सहस्रांतं जले वपुः ॥ मग्नं कुर्य्याज्जपेन्मंत्रं कुर्याद्वायुनिरोधनम् ॥१२॥ ततः स्नानत्रयं कुर्याच्छिरोव्याहृतिपूर्वकम् ॥ त्रिवारं त्रिविधं स्नानं पायुमेढ्रं शिरः स्तनम् ॥१३॥ प्रोक्षयेच्छंखमुद्राभिर्व्याहृत्यादिशिरोन्तकम् ॥ ततस्तीरं समागत्य गायत्रीकवचं पठेत् ॥१४॥ शुचिवस्त्रांगमाश्रित्य ललाटं तिलकं तथा ॥ ओमापो ज्योतिमंत्रेण शिखाबंधनमाचरेत् ॥१५॥ त्रिकोणमध्ये ह्रींकारं कोणान्ते प्रपदं तथा ॥ दंडेषु व्याहृतिं चैवमुल्लिखेदुदकं तथा ॥१६॥ प्रणवेन बहिर्जप्त्वा जलं पीत्वा च मार्जनम् ॥ न तत्र विन्यसेत्संध्यामन्यथा शूद्रवद्भवेत् ॥१७॥ इति श्रीविश्वामित्रकल्पे आह्निकलक्षणयोगो नाम प्रथमः परिच्छेदः॥१॥ चतुर्विंशतिनामानि तत्तत्स्थानेषु विन्यसेत् ॥ केशवादीनि विन्यस्य पौराणाचमनं जपेत् ॥१॥ चतुर्विंशतिवर्णानां केशवादिरनुक्रमात् ॥ देव्याः पादैस्त्रिभिः पीत्वा चांगुलैर्नवभिः स्पृशेत् ॥२॥ सप्तव्याहृतिगायत्री शिरस्तुर्यद्वयं न्यसेत् ॥ श्रुतिस्मृतिविधानेन द्विविधं परिकल्पयेत् ॥३॥ तृतीयं मूलमंत्रेण क्रमाद्वर्णानि विन्यसेत् ॥ आचमनविधीः प्रोक्तः प्रौराणः स्मार्त आगमः ॥४॥ श्रौतं मानसमाचम्य पञ्चभिः श्रुतिचोदितैः ॥ संध्याप्रारंभकाले त्वाचमनं त्रियतं न्यसेत् ॥५॥ कुरुते सर्वसिद्धिः स्यान्नास्ति चेन्निष्फलं भवेत् ॥ संहतांगुलिना तोयं ब्रह्मतीर्थे पिबेज्जलम् ॥ मुक्तांगुष्ठं कनिष्ठायां शेषेणाचमनं भवेत् ॥६॥ गोकर्णाकृतिहस्तेन माषमात्रं जलं पिबेत् ॥ न्यूनातिरिक्तमात्रेण तज्जलं सुरया समम् ॥७॥ आदौ चांते तथा मध्ये न्यसेच्चाचमनं क्रमात् ॥ श्रुतिस्मृतिपुराणानि पर्यायेण विलोमतः ॥८॥ केशवादित्रिभिर्नाम अपः पीत्वा यथाविधि ॥ गोविंदमग्रतो न्यस्य विष्णुं सुषुम्नि विन्यसेत् ॥९॥ मधुसूदनमादित्यं शुद्धांशुञ्च त्रिविक्रमम् ॥ अग्रतो वामनञ्चैव हस्तयोः श्रीधरं तथा ॥१०॥ हृषीकेश पद्मनाभमुभयोः पादयोर्न्यसेत् ॥ दामोदरं ब्रह्मरंध्रे नासा संकर्षणस्य च ॥११॥ नासामध्ये तु विन्यस्य नासांते वा विनिर्द्दिशेत् ॥ दक्षनास्तु विन्यस्य वासुदेवं तथैव च ॥१२॥ प्रद्युम्नं च तथा वामे अनिरुद्धं च दक्षिणे ॥ पुरुषोत्तमं वामनेत्रे दक्षिणे च अधोक्षजम् ॥१३॥

नारसिंहं वामनेत्रे नाभौ चाप्ययुतं न्यसेत् ॥ जनार्दनं हृदि न्यस्य भुजे दक्षिणबाहुके ॥१४॥
इति विश्वामित्रकल्पे आचमनयोगो नाम द्वितीयः परिच्छेदः ॥२॥ प्राणायामत्रयेणैव प्रातःसंध्यां समाचरेत् ॥ प्राणायामसमायुक्तं प्राणायाममिति स्मृतम् ॥१॥
उत्तमं नवधा चैव मध्यमं ऋतुसंख्यया ॥ अधमं त्रयमित्याहुः प्राणायामो विधीयते ॥२॥
सप्तव्याहृतिभिश्चैव प्राणायामं पुटीकृतम् ॥ व्याहृत्यादिशिरोंतं च प्राणायामत्रयत्रिकम् ॥३॥
सव्याहृतिंसप्रणवां गायत्रीं शिरसा सह ॥ त्रिः पठेदायतः प्राणान्प्राणायामः स उच्यते ॥४॥
बिंदुतः प्राणमार्गं च गायत्रीं बिंदुसंयुताम् ॥ व्याहृत्यादिशिरोंतं च प्राणायामत्रयत्रिकम् ॥५॥
आदौ कुंभकमाश्रित्य रेचपूरकवर्जितम् ॥ व्याहृत्यादिशिरोंतं च प्राणायामं तु कुंभकम् ॥६॥
प्राणायामसमानबिंदुसहितं बिदुत्रयं संयुतं सप्तव्याहृतिबिंदुसंपुटपरं वेदादिपादत्रयम् ॥ गायत्रीं शिरसा त्रिनाडिसहितामीड्यद्वये द्वे परे शुद्धं केवलकुंभकं प्रतिदिनं ध्यायामि तत्त्वंपदम् ॥७॥
अधमे द्वादशी मात्रा मध्यमे द्विगुणा मता ॥ उत्तमा त्रिगुणा प्रोक्ता प्राणायामं निरुंधयेत् ॥८॥
रेचकं कुंभकं चैव पूरकं वायुरोधनम् ॥ एवं क्रमेण युंजीत प्राणायामस्य लक्षणम् ॥९॥
निषिद्धं रेचकं ज्ञेयं पूरकं च तथैव च ॥ अमोघं कुंभकं प्रोक्तं प्राणायामं प्रकीर्तितम् ॥१०॥
अघोषनिर्घोषगमागमस्थं नाडीद्वयं रेचकपूरकं च ॥ कुंभोपमं पूर्णघटप्रकारं ह्येवंविधं स्याच्छ्वसनस्य साध्यम् ॥११॥
शब्दपूर्वकमभ्यासं शब्दव्यंजनसंयुतम् ॥ भिन्नभांडोदकं यद्वच्छ्वसनस्य व्यतिक्रमात् ॥१२॥
इडापिंगलासुषुम्नाच्छद्बपूर्वव्यतिक्रमात् ॥ तत्सर्वं निष्फलं प्रोक्तमिति शंकरभाषितम् ॥१३॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ॥ ततो धर्मं समाश्रित्य प्राणायामविदो विदुः ॥१४॥
नासापुटं त्वंगुलीभिः पंचभिर्वायुरोधनम् ॥ शनैः शनैस्तु निःशब्दं प्राणायामं निरोधयेत् ॥१५॥
नासिकापुटमंगुल्या निधायैकेन मारुतम् ॥ आकृष्य धारयेदग्निं प्राणायामं विचिंतयेत् ॥१६॥
प्राणायामेन ज्ञात्वा च स्नापयेच्चिन्मयं शिवाम् ॥ तदादौ मानसं कुर्यात्तदा केवलकुंभकम् ॥१७॥
पंच प्रजालकं चैव प्राणायामं समाचरेत् ॥ पूजामानससंयुक्तं प्राणायामफलं भवेत् ॥१८॥
पंचपूजां विना येन प्राणायामं करोति यः ॥ तस्य निष्फलितं कर्म विश्वामित्रेण भाषितम् ॥१९॥
लकारं च हकारं च यंकारं च रकारयोः ॥ चकारमितिविख्यातं पंचपूजात्मकं जपेत् ॥२०॥
सिद्धासनसमो नास्ति न कुंभेनैव लोपमम् ॥ मंददृष्टिसमो नास्ति प्राणायामं समभ्यसेत् ॥२१॥
अंतश्चेतो बहिश्चक्षुरधः स्थपय सुखासनम् ॥ समत्वं च शरीरस्य प्राणायामं समभ्यसेत् ॥२२॥
अस्त्रप्रयोगकाले तु प्राणायामं च लंबकः ॥ प्राणायामबलोपेत उपसंहारकारकः ॥२३॥
तस्मात्सर्वप्रयत्नेन प्राणायामं समाचरेत् ॥ सर्वधर्मपरित्यागी स महापातकी भवेत् ॥२४॥
इति श्रीविश्वामित्रकल्पे प्राणायामयोगो नाम तृतीयः परच्छेदः ॥३॥ पादंपादं क्षिपेन्मूर्ध्नि प्रतिप्रणवसंपुटम् ॥ निक्षिपेदष्टपादं तु अधो यस्य क्षयाय च ॥१॥
अष्टाक्षरं नवपदं पदादौ ब्रह्महा भवेत् ॥ ऋचादौ मार्जनं कुर्य्यात्सोऽश्वमेधफलं लभेत् ॥२॥
यस्य क्षयाय पादं तु आपः सिंधुत्वमेव च ॥ भूमौ पादौ विनिःक्षिप्य इतरन्मूर्ध्नि विन्यसेत् ॥३॥
प्रातः सूर्यश्चमंत्रेण सायमग्निः पिबेज्जलम् ॥३॥
आफ पुनंतु मध्याह्ने क्रमेणाचमनं न्यसेत् ॥४॥
आपोहिष्ठेति मंत्रेण नवपादं द्विवारकम् ॥ हिरण्यवर्णाश्चत्वारो दधिमंत्रं द्विवारकम् ॥५॥
पदादौ क्लीं पदं मध्ये पदांते मार्जनं भवेत् ॥ ऋचादौ प्रणवं चोक्त्वा ऋचोंऽते मार्जनं भवेत् ॥६॥

सत्वं रजस्तमो जातं मनोवाक्कायिकादिषु ॥
जाग्रत्स्वप्नसुषुप्त्यादिनवैतान्नवभिर्दहेत् ॥७॥
दधिद्विमार्ज्जनं चैव हिरण्यादिचतुष्टयम् ॥
कामक्रोधदिषड्वर्गं मार्ज्जयेत्सर्वमार्ज्जनम् ॥८॥
इति श्रीविश्वामित्रकल्पे मार्ज्जनयोगो नाम चतुर्थः
परिच्छदः ॥४॥ संध्यावंदनवेलायामर्घ्यं दद्यात्त्रयं बुधः ॥
सायं प्रातः समानं स्यान्मध्याह्ने च पृथग्विधिः ॥१॥
एकं मध्याह्नकाले तु सायं प्रातस्त्रयस्त्रयः ॥ एवं ज्ञात्वा
सृजेदर्घ्यं सूर्यं नक्षत्रपूर्वकम् ॥२॥
एकं शस्त्रास्त्रनाशाय एकं हनननाशने ॥ असुराणां
वधायार्घ्यं प्रायश्चित्तार्थसंयुतम् ॥३॥
दद्यात्केवलगायत्र्या मूढो ह्यर्घ्यं तु यो द्विजः ॥ स
बिन्दुब्राह्मणो नाम सर्वधर्मबहिष्कृतः ॥४॥
ब्रह्मास्त्रं नाभिजानाति स विप्रः शूद्र एव हि ॥ तस्य
कर्मादिकं जातं धर्माद्यं निष्फलं भवेत् ॥५॥
बीजमंत्रेण गायत्र्याः प्रणवेत्यभिधीयते ॥६॥
देहस्तु दंड इत्युक्तः संज्ञाकवचमेव हि ॥ सर्वांगानि पदो
मंत्रं सर्वमंत्रे त्वयं विधिः ॥७॥
अस्त्राष्टवारतः प्रोक्ता गायत्री व्याप्य उच्यते ॥
एतत्षण्मन्त्रकं ज्ञात्वा अर्घ्यं दद्याद्धि नामतः ॥८॥
एकं मध्याह्नकाले च प्रायश्चित्तं द्वितीयकम् ॥ अर्घ्यद्व
यं तु मध्याह्ने तथा चोक्तं महामुने ॥९॥
अर्घ्यत्रयं प्रयोगार्थं प्रायश्चित्तं चतुर्थकम् ॥ सायं
प्रातर्द्विजादीनामेवमेव विधिः क्रमात् ॥१०॥
ब्रह्मास्त्रं ब्रह्मदंडं च ब्रह्मशीर्षं च संयुतम् ॥
अर्घ्यत्रयं प्रयोगार्थमेवमेवमुदाहृतम् ॥११॥
शस्त्रमादौ ततो दंडं शिखात्रीणि समुच्चरेत् ॥ पर्यायेण
त्रिरुच्चार्य्यमंजलिं च त्रिधाहरेत् ॥१२॥
अर्घ्यत्रयं प्रयोक्तव्यमभिमंत्रितमंजलिम् ॥ त्रियुक्तं
विसृजेतर्घ्यमसुराणां वधाय च ॥१३॥
अस्त्रदंडशिरोयुक्तमर्घ्यमेकं समुच्चरेत् ॥ अस्त्रं
वाहनरक्षोघ्नमेकांजलिजलं क्षिपेत् ॥१४॥
प्रायश्चित्तं द्वितीयार्घ्यमसुराणां वधाय च ॥ प्रदक्षिणं
पृथिव्यां च सर्वपापैः प्रमुच्यते ॥१५॥
असावादित्यमंत्रेण ब्रह्मेत्यादि प्रदक्षिणम् ॥ आपोभिरयुतं
कार्यं सर्वाघौघनिकृंतनम् ॥१६॥
हंसहंसेतिमंत्रस्य बृहत्यंतं समुच्चरन् ॥ शिरसा दंडमस्त्रं
च सम्मुख इव निक्षिपेत् ॥१७॥
उपमंत्रं समुच्चार्य्य शिरस्तत्र समुद्धरेत् ॥ अर्घ्यमेकं तु
मध्याह्ने तथा मुक्तं महामुने ॥१८॥
तर्ज्जन्यंगुष्ठयोगेन राजसी मुद्रिका भवेत् ॥
राक्षसीमुद्रिकादत्तं तत्तोयं रुधिरं भवेत् ॥१९॥
निक्षिपेद्यदिमूढात्मा रौरवं नरकं व्रजेत् ॥
अंगुष्ठच्छायापतितं देवतामुद्रिका भवेत् ॥२०॥
देवतामुद्रिकादत्ते सर्वैः पापैः प्रमुच्यते ॥ एवं
विज्ञानमात्रेण सद्यः सिद्धिर्भविष्यति ॥२१॥
इति श्रीविश्वामित्रकल्पेऽर्घ्यदानयोगो नाम पंचमः
परिच्छेदः ॥५॥ ओमित्येकाक्शह्नं चोक्तं न्यासध्यानपुरः
सरम् ॥ यथाशक्ति जपं कुर्य्यान्नित्यकर्म समाचरेत्
॥१॥ शुचिर्भूमौ लिखेद्यंत्रं बीजं बिंदुसमन्वितम् ॥
बीजराजं लिखेन्मध्ये वह्निमंडलमध्यगे ॥२॥
चतुरस्त्रं ततो हस्तं सुदृढं मृदु निर्मलम् ॥
तत्रोपरिसमासीनो गायत्रीजपमाचरेत् ॥३॥
खशुद्धिं भूतशुद्धिं च कृत्वा शोषणदाहनम् ॥ प्लवने च
ततः कुर्यात्प्रणवादित्रयं क्षरैः ॥४॥
प्राणायामसमायुक्तश्चांतर्बाह्यं समातृकात् ॥ देहे न्यासं
ततः कुर्यात्करागन्यासमाचरेत् ॥५॥
ऋषिं न्यसेत्पूर्वमुखे तथा छन्द उदीरितम् ॥ देवता हृदि
विन्यस्य गुह्ये बीजमिति स्मृतम् ॥६॥
शक्तिं विन्यस्य चाधारे पादयोः कीलकं न्यसेत् ॥ एवं
न्यासविधिं कृत्वा ऋष्यादिन्यासपूर्वकम् ॥७॥
आवाहनादिभेदं च दश मुद्राः प्रदर्शयेत् ॥ आयातु वरदा
देवी अंगप्रत्यंगसंगमे ॥८॥
प्रातर्गायत्री सावित्री मध्याह्ने च सरस्वती ॥ एवमावाहनं
ज्ञात्वा संध्यायां जपमाचरेत् ॥९॥
हस्ताभ्यामनुलोमेन आवाहनमनाहुते ॥ नामत्रयमृषिश्छंदः

क्रमेणावाहनं भवेत् ॥१०॥
मूलाधारेण गायत्री सावित्री मणिपूरके ॥ द्वादशारे
सरस्वती छंदो नाडीत्रयं तथा ॥११॥
ऋषिर्मूर्घ्नि सुविज्ञेय आवाहनमनुक्रमात् ॥ आवाहनं
यथोक्तं च यथोक्तं तु विसर्ज्जनम् ॥१२॥
एवं जानीहि विप्रेन्द्र जपध्यानं समाचरेत् ॥ आवाहनं
ततो न्यासं विना जाप्यं तु निष्फलम् ॥१३॥
चतुर्विंशतिगायत्रीं प्रातः स्नात्वा जपेन्मनुम् ॥ प्राणायामं
ततः कुर्यान्न्यासध्यानं समाचरेत् ॥१४॥
करन्यासं ततः कुर्यादंगन्यासं तथैव च ॥
चतुश्चतुश्चतुष्कं च चतुश्चतुश्चतुश्चतुः ॥१५॥
षडंगं विन्यसेद्देवीं गायत्रीं वेदमातरम् ॥
व्याहृतित्रयमुच्चार्य अनुलोमं च बिभ्रतः ॥१६॥
करांगन्यासमारभ्य गायत्री पूर्ववद्भवेत् ॥ अकारं च उकारं
च मकारं बिंदुसंयुतम् ॥१७॥
अनुलोमं न्यसेत्तत्र त्रिरक्षरसमन्वितम् ॥
चतुर्विंशतिवर्णानां पल्लवोऽयमुदाहृतः ॥१८॥
चतुरक्षरसंयुक्तं करांगन्यासमाचरेत् ॥ तूर्यपादं विना
न्यासमाद्यंतं प्रणवैः सह ॥१९॥
व्याहइत्त्रयमुच्चार्य चतुरक्षरसंयुतम् ॥ पुनर्व्याहृत्मुच्चार्य
करांगन्यासमाचरेत् ॥२०॥
पादंपादं द्विपादं च प्रतिप्रणवसंपुटम् ॥
करांगन्याससंयोगात्षड्भागैस्त्रिपदा भवेत् ॥२१॥
अंगुष्ठादिचतुर्वर्णा अनुलोमक्रमेण तु ॥ हृदयादिचतुर्वर्णाः
क्रमेणैव विलोमतः ॥२२॥
चतुर्वर्णान् विना यस्तान्विपर्णं संन्यसेद्द्विजः ॥ तस्य
वैफल्यमाप्नोति सत्यं सत्यं न संशयः ॥२३॥
अंगन्यासं करन्यासं देहन्यासं विना जपेत् ॥ अंधत्वं
बैरत्वं च मूकत्वं प्राप्नुयान्मनुः ॥२४॥
इति श्रीविश्वामित्रकल्पे आवाहनादियोगो नाम षष्ठः
परिच्छेदः ॥६॥ ध्यानं मुद्रां नमस्कारं गुरुमंत्रं तथैव च
॥ संयोगमात्मसिद्धिञ्च पञ्चधैवं विभावयेत् ॥१॥
प्रातः केवलगायत्री मध्याह्ने व्याहृतीयुता ॥ सायाह्ने
तूर्यया युक्ता नित्यजाप्यं समाचरेत् ॥२॥
पादादौ रेफसंयुक्ता गायत्रीजपलक्षणम् ॥३॥
पादत्रयं समुच्चार्य प्रतिलोमं ततश्चरेत् ॥ रेफबिंदू
तदाद्यन्तौ गायत्रीजपमाचरेत् ॥४॥
गायत्रीं पूर्वमुच्चार्य्य तुर्य्यांत्यादिविलोमतः ॥ सायंसंध्यां
जपेदेवं साधकः सर्वसिद्धये ॥५॥
तकारादियकारांतमनुलोमं विलोमतः ॥ तुर्यपादं विना मंत्रं
प्रातःसंश्यामथाचरेत् ॥६॥
भकारादिहिकारांतं मध्यपादमिति स्मृतम् ॥ तार्तीयं तु
प्रयोक्तव्यं तदर्घ्ये प्रथमं भवेत् ॥७॥
धकारादियकारांतं तृतीयं पादमुच्चरेत् ॥ प्रथमं च द्वितीयं
च त्रिविधं जपलक्षणम् ॥८॥
कालत्रयं त्रिधा जाप्यं त्रिकालं त्रिविधं स्मृतम् ॥
अनुलोमविलोमाभ्यां चिरं सिद्धिमवाप्नुयात् ॥९॥
चतुर्विंशतिवर्णानामनुलोमं जपेदपि ॥ पूर्णजपयफलं
नास्ति अर्द्धजाप्यफलं लभेत् ॥१०॥
चतुष्पादं तु गायत्री अनुलोमविलोमतः ॥ नित्यं जाप्यं
प्रकुर्वीत भुक्तिं मुक्तिं लभेन्नरः ॥११॥
नित्यनैमित्तकाम्यादिव्यस्ताव्यस्तं जपेन्मनुम् ॥
प्रातर्मध्याहनसायाहनं जपेदेवं क्रमेण तु ॥१२॥
जपपारायणं कुर्य्यात्त्रिपदासंपुटं नव ॥ एवं ज्ञात्वा
जपेन्नित्यमेकः कोटिगुणं भवेत् ॥१३॥
कालत्रयं यथोक्तं च जाप्यपारायणं परम् ॥
अनंतफलमाप्नोति सत्यं सत्यं न संशयः ॥१४॥
अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा ॥
अष्टाविंशतिमेवाथ गायत्रीदशकं जपेत् ॥१५॥
ॐकारः पुरुषश्चैव गायत्री सुंदरी तथा ॥ तयोः
संयोगकाले तु वस्त्रमाच्छाद्य गण्यते ॥१६॥
वरेण्यं विरलं चोक्त्वा जपकाले विशेषतः ॥ पारायणेषु
युक्तं स्यादन्यथा विफला भवेत् ॥१७॥
इति श्रीविश्वामित्रकल्पे त्रिकालजपयोगो
नाम सप्तमः परिच्छेदः ॥७॥
॥ इति विश्वामित्रकृतश्रीगायत्रीकल्पः सम्पूर्णः ॥

# अथ श्रीगायत्रीपद्धतिः

ब्रह्मविष्णुशिवाराध्यां गायत्रीं लोकपावनीम् ॥ नमस्कृत्यानुरोधेन लिखेयं पद्धतिं क्रमात् ॥१॥ साधको ब्राह्मे मुहूर्त्ते चोत्थाय यथोक्तं शौचं कृत्वा नद्यादौ स्नानं कृत्वा प्राणायामत्रयं कृत्वा अर्घ्यांतां संध्यां कुर्यात् । प्राणायामो यथा ॥ ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यं ॐतत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ आपो ज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोम् ॥ प्रणवस्य ब्रह्मा ऋषिः गायत्रीच्छंदः परमात्मा देवता शरीरशुद्ध्यर्थे जपे विनियोघ ॥ ब्रह्मणे नमः शिरसि ॥ गायत्रीछंदसे नमः मुखे ॥ परमात्मदेवतायै नमः हृदये ॥ करसंपुटं कृत्वा समस्तदुरितक्षयार्थं न्यासं करिष्ये ॥ व्याहृतीनां जमदग्निभरद्वाजात्रिगौतमकश्यपविश्वामित्रवसिष्ठादिभ्य ऋषिभ्यो नमः शिरसि ॥ सप्तर्चितनिलसवितृप्रजापति वरुणेंद्रविश्वेदेवदेवताभ्यो नमः मुखे ॥ गात्र्युष्णिग नुष्ठुब्बृहती पंक्ति त्रिष्टुब्जगतीछंदोभ्यो नमः हृदि ॥ एवं करसंपुटं कृत्वा समस्तदुरितक्षयार्थे गायत्रीन्यासः ॥ गायत्र्या विश्वामित्र ऋषये नमः शिरसि ॥ गायत्रीछंदसे नमः मुखे ॥ परमात्मदेवतायै नमः हृदये ॥ ॐ भूः नमः हृदये ॥ ॐभुवः नमः मुखे ॥ ॐस्वः नमः दक्षांसे ॥ ॐमहः नमः वामांसे ॥ ॐजनः नमः दक्षिणोरौ ॥ ॐ तपः नमः वामोरौ ॥ ॐ सत्यं नमः जठरे ॥ इति व्याहृतिन्यासः ॥ अथाक्षरन्यासः ॥ ॐतत् नमः गुल्फयोः ॥ ॐसं नमः पदपार्श्वयोः ॥ ॐविं नमः जान्वोः ॥ ॐतुं नमः पादमुखयोः ॥ ॐर्वं नमः जंघयोः ॥ ॐरें नमः नाभौ ॥ ॐणिं नमः हृदये ॥ ॐ यं नमः कंठे ॥ ॐभं नमः हस्तयोः ॥ ॐ र्गों नमः मणिबंधयोः ॥ ॐ दें नमः कूर्परयोः ॥ ॐ वं नमः बाहुमूलयोः ॥ ॐस्यं नमः आस्ये ॥ ॐधीं नमः नासापुटयोः ॥ ॐमं नमः कपोलयोः ॥ ॐहिं नमो नेत्रयोः ॥ ॐधिं नमः कर्णयोः ॥ ॐयों नमः भ्रूमध्ये ॥ ॐयों नमः मस्तके ॥ ॐनः नमः पश्चिमवक्त्रे ॥ ॐप्रं नमः उत्तरवक्त्रे ॥ इत्यक्षरन्यासः ॥ अथ पदन्यासः ॥ ॐतत् नमः शिरसि ॥ ॐसवितुर्नमः भ्रुवोर्मध्ये ॥ ॐवरेण्यं नमः नेत्रयोः ॥ ॐभर्गः नमः मुखे ॥ ॐदेवस्य नमः जठरे ॥ ॐधीमहि नमः हृदये ॥ ॐधियः नमः नाभौ ॥ ॐयः नमः गुह्ये ॥ ॐनः नमः जान्वोः ॥ ॐप्रचोदयात् नमः पादयोः ॥ ॐआपोज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोमिति शिरसि ॥ इति पदन्यासः ॥ अथ पादन्यासः ॥ ॐतत्सवितुर्वरेण्यं नमः नाभ्यादिपादपर्यंतम् ॥ ॐभर्गो देवस्य धीमहि नमः हृदयादिनाभ्यन्तम् ॥ ॐधियो यो नः प्रचोदयात् नमः मूर्धादिहृदयांतम् ॥ ॐपरोरजसे सावदोम् इति मूर्ध्नि विन्यसेत् ॥ अथ षडंगन्यासः । ॐब्रह्मणे हृदयाय नमः ॥ ॐविष्णवे शिरसे स्वाहा ॥ ॐरुद्राय शिखायै वषट् ॥ ॐईश्वराय कवचाय हुम् ॥ ॐसदाशिवाय नेत्रत्रयाय वौषट् ॥ ॐसर्वात्मने अस्त्राय फट् ॥ इति मंत्रेणोर्ध्वाधस्तालत्रयं कृत्वा छोटिकमुद्रया दिग्बंधनं विधाय मूलेन व्यापकं कुर्य्यात् ॥ इति षडंगम् ॥ अथ लयांगन्यासः ॥ ॐ अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ क्षं ळं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं लॄं लृं ॠं ऋं ऊं उं ईं इं आं अं त्यादचोप्रनः योयोधिहिमधीस्यवदेर्गोभण्यंरेर्वतुवित्सतस्वःवःर्भुभू ॐ इति हृदयादिमुखांतम् ॥ एवमेव हृदयादिकेशांतम् तथैव व्यापयेत् ॥ इति लयांगन्यासः ॥ इति विन्यस्य पीठन्यासं कुर्यात् ॥ ॐमं मंडूकाय नमः मूलाधारे ॥

ॐकं कालाग्निरुद्राय नमः स्वाधिष्ठाने ॥ ॐमं मूलप्रकृत्यै नमः नाभौ ॥ ॐआं आधारशक्तये नमः हृदये ॥ पुनस्तत्रैव ॥ कं कूर्माय नमः ॥ अं अनन्ताय नमः ॥ वं वराहाय नमः ॥ धं धरिण्यै नमः ॥ सं सुधासिन्धवे नमः ॥ रं रत्नद्वीपाय नमः ॥ मं मणिमंडपाय नमः ॥ कं कल्पवृक्षाय नमः ॥ स्वं स्वर्णवेदिकायै नमः ॥ रं रत्नसिंहासनाय नमः ॥ धं धर्माय नमः दक्षांसे ॥ ज्ञां ज्ञानाय नमः वामांशे ॥ वं वैराग्याय नमः वामोरौ ॥ ऐं ऐश्वर्याय नमः दक्षोरौ ॥ अं अधर्माय नमः मुखे ॥ अं अज्ञानाय नम वामपार्श्वे ॥ अं अवैराग्याय नमः नाभौ ॥ अं अनैस्व्हर्याय नमः दक्षपार्श्वे ॥ पुनर्हृदि । अं अनंताय नमः ॥ अं अंबुजाय नमः ॥ आं आनन्दकन्दाय नमः ॥ सं संविन्नालाय नमः ॥ सं सर्वतत्त्वात्मकपद्माय नमः ॥ प्रं प्रकृतिमयपत्रेभ्यो नमः ॥ विं विकारमयकेसरेभ्यो नमः ॥ पं पंचाशद्वर्णकर्णिकायै नमः ॥ ॐ मं दशकलात्मने वह्निमंडलाय नमः ॥ अं द्वादशकलात्मने सूर्यमंडलाय नमः ॥ उं षोडशकलात्मने चंद्रमंडलाय नमः ॥ सं सत्त्वाय नमः ॥ रं रजसे नमः ॥ तं तमसे नमः ॥ आं आत्मने नमः ॥ अं अंतरात्मने नमः ॥ पं परमात्मने नमः ॥ ह्रीं ज्ञानात्मने नमः ॥ मां मायातत्त्वाय नमः ॥ कं कलातत्त्वाय नमः ॥ विं विद्यातत्त्वाय नमः ॥ पं परतत्त्वाय नमः ॥ ततोऽष्टदले रां दीप्तायै नमः ॥ रीं सूक्ष्मायै नमः ॥ रूं जयायै नमः ॥ रें भद्रायै नमः ॥ रैं विभूत्यै नमः ॥ रों विमलायै नमः ॥ रौं अमोधायै नमः ॥ रं विद्युतायै नमः ॥ पीठमध्ये । रः सर्वतोमुख्यै नमः ॥ तदुपरि नित्यपूजाचक्रं विधाय ॥ ॐ ब्रह्मविष्णुरुद्रांबिकात्मकाय सौरपीठात्मने नमः ॥ इति पीठन्यासः ॥ मूलेन प्राणायामत्रयं कृत्वा मूलेन व्यापकं कृत्वा ध्यायेत् ॥ मुक्ताविद्रुमहेमनीलधवलच्छाअयैर्मुखैस्त्रीक्षणैर्युक्तामिंदुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम् ॥ गायत्रीं वरदाभयांकुशकशाः शुभ्रं कपालं गुणं शंखं चक्रमथारविंदयुगलं हस्तैर्वहंतीं भजे ॥ इति ध्यात्वा बहिः पूजोक्तरीत्या देवीं सौवर्णी च संपूज्य गंधपुष्पधूपदीपनैवेद्यतांबूलाद्युपचारान्प्रकल्प्य किंचिज्जपेत् ॥ स्वाग्तं देवदेवेशि सन्निधौ मे महेश्वरि ॥ गृहाण मानसीं पूजां यथार्थपरिभाविताम् ॥१॥ दशधा मूलं जपित्वा जपं देव्याः करे समर्प्य मनसा पुष्पांजलिं दत्त्वा क्षणं तदात्मकं विभाव्य वरदाभयांकुशकशाकपालगुणशंखचक्राब्जयोन्यादिमुद्राः प्रदर्शयेत् ॥ इति मानसी पूजा ॥ अथ बहिःपूजार्थमनुज्ञाप्य बहिःपूजां कुर्यात् । स्ववामे अस्त्रक्षालितत्रिपदिकां निधाय तदुपरि अस्त्रक्षालितं कलशं निधाय शुद्धतोयं मूलेनापूर्य्य मूलेनाष्टकृत्वोऽभिमंत्र्य जातवेदसे इत्यृचा त्र्यंबकमितिऋचा गायत्र्या च सकृतभिमंत्र्य गंधपुष्पाभ्यां पूजयेत् ॥ इति कलशसंस्थापनम् ॥ अथ सामान्यार्घ्यस्थापनविधिः ॥ अस्त्रक्षालितां त्रिपदिकां निधाय तत्रास्त्रक्षालितं ताम्रपात्रं निधाय मूलेन शुद्धजलमापूर्य्य मूलेनाष्टवारं संमंत्र्य गंधपुष्पाभ्यां पूजयेत् ॥ इति सामान्यार्घ्यस्थापनविधिः ॥ अथ विशेषार्घ्यस्थापनविधिः ॥ पीठात्मनोर्मध्ये चंदनेन कनिष्ठिकया त्रिकोणं षट्कोणं च कृत्वा । अग्नये हृदयाय नमः ॥ ईशानाय शिरसे स्वाहा ॥ निरृतये शिखायै वषट्॥ वायवे कवचाय हुम् ॥ पुरः नेत्रत्रयाय बौषट्॥ पूर्वे अस्त्राय फट् ॥ सामान्यार्घ्यजलेन प्रोक्ष्य चंदनेन पूजयेत् ॥ त्रिकोणे आधारं स्थापयामि ॥ आं आधारशक्तिं स्थापयामि ॥ पृथिवीद्वीपं स्थापयामि ॥ तत्र पूजा ॥ मं अग्निमंडलाय दशकलात्मने नमः ॥

| | | | |
|---|---|---|---|
| धूं | धूम्रायै | नमः | ॥१॥ |
| उं | उष्मायै | नमः | ॥२॥ |
| ज्वं | ज्वलिन्यै | नमः | ॥३॥ |
| ज्वां | ज्वालिन्यै | नमः | ॥४॥ |
| विं | विस्फुलिंगिन्यै | नमः | ॥५॥ |
| सु | सुश्रियै | नमः | ॥६॥ |

सुं सुरूपायै नमः ॥७॥
कं कपिलायै नमः ॥८॥
हं हव्यवाहनायै नमः ॥९॥
कं कव्यवाहनायै नमः ॥१०॥
इति आधारपूजा ॥ आधारोपरि अर्घ्यपात्रं संस्थाप्य पात्रोपरि पूजा ॥ अं अर्कमंडलाय द्वादशकलात्मने नमः ॥ तं तपिन्यै नमः ॥१॥
तां तापिन्यै नमः ॥२॥
धूं धूम्रायै नमः ॥३॥
मं मरीच्यै नमः ॥४॥
ज्वां ज्वालिन्यै नमः ॥५॥
रुं रुच्यै नमः ॥६॥
सुं सुषुम्णायै नमः ॥७॥
भों भोगदायै नमः ॥८॥
विं विश्वायै नमः ॥९॥
बों बोधिन्यै नमः ॥१०॥
धां धारिण्यै नमः ॥११॥
क्षं क्षमायै नमः ॥१२॥
इत्यर्घ्यपात्रपूजा ॥ विलोममातृकामुच्चरन् शुद्धजलमापूरयेत् ॥ ॐक्षं नमः ॥ प्रणवः सर्वत्र ॥ ळं नमः ॥ हं नमः ॥ सं नमः ॥ षं नमः ॥ शं नमः ॥ वं नमः ॥ लं नमः ॥ रं नमः ॥ यं नमः ॥ मं नमः ॥ भं नमः ॥ बं नमः ॥ फं नमः ॥ पं नमः ॥ नं नमः ॥ धं नमः ॥ दं नमः ॥ थं नमः ॥ तं नमः ॥ णं नमः ॥ ढं नमः ॥ डं नमः ॥ ठं नमः ॥ टं नमः ॥ ञं नमः ॥ झं नमः ॥ जं नमः ॥ छं नमः ॥ चं नमः ॥ ङं नमः ॥ घं नमः ॥ गं नमः ॥ खं नमः ॥ कं नमः ॥ अः नमः ॥ अं नमः ॥ औं नमः ॥ ओं नमः ॥ ऐं नमः ॥ एं नमः ॥ ॡं नमः ॥ ऌं नमः ॥ ॠं नमः ॥ ऋं नमः ॥ ऊं नमः ॥ उं नमः ॥ ईं नमः ॥ इं नमः ॥ आं नमः ॥ अं नमः ॥ तत्र पूजा ॥ उं सोममंडलाय षोडशकलात्मने नमः ॥ अं अमृतायै नमः ॥१॥
मां मानदायै नमः ॥२॥
पूं पूषायै नमः ॥३॥
तुं तुष्ट्यै नमः ॥४॥
पुं पुष्ट्यै नमः ॥५॥
रं रत्यै नमः ॥६॥
धृं धृत्यै नमः ॥७॥
शं शशिन्यै नमः ॥८॥
चं चन्द्रिकायै नमः ॥९॥
कां कान्त्यै नमः ॥१०॥
ज्यों ज्योत्स्नायै नमः ॥११॥
श्रीं श्रियै नमः ॥१२॥
प्रीं प्रीत्यै नमः ॥१३॥
अं अङ्गदायै नमः ॥१४॥
पूं पूर्णायै नमः ॥१५॥
पूं पूर्णामृतायै नमः ॥१६॥
अंकुशमुद्रया तीर्थमावाह्य ॥ गंगे च यमुने चैव गोदावरि सरस्वति ॥ नर्मदे सिंधु कावेरि जलेऽस्मिन्सन्निधौ भव ॥ योनिमुद्रां प्रदर्श्य धेनुमुद्रयाऽमृतीकृत्य शंखमुद्रां प्रदर्श्य गंधादिभिः संपूज्य मूलेनाष्टवारमभिमंत्र्य मत्स्यमुद्रयाऽऽच्छाद्य सामान्यार्घ्यजलेन सिंचेत् ॥ ॐ आत्मतत्त्वाय नमः ॥ ॐ विद्यातत्त्वाय नमः ॥ ॐ शिवतत्त्वाय नमः ॥ परो रजसे सावदोमिति सप्तकृत्वोऽभिमंत्र्य तज्जलदेवतात्मैक्यं विभाव्य किंचित्पाअत्रांतरे गृहीत्वा पूजोपकरणसामग्रीमात्मानं च त्रिः प्रोक्षयेत् ॥ इति विशेषार्घ्यस्थापनविधिः ॥ अर्घ्यस्योत्तरे पात्रचतुष्टयं पाद्यार्घ्याचमनीयमधुपर्कार्थं संस्थाप्य सकृत्यभिमंत्र्य तोयेनापूर्य्य मूलेन त्रिवारमभिमंत्र्य न्यासक्रमेण धर्माईन्प्रोक्षणीरूपेण संपूज्य तस्मिन्पीठोपरि देवतां विभाव्य सर्वांगेषु पंचपुष्पांजलिं दत्वा मूलाधारात्कुंडलीमुत्थाप्य द्वारे स्थित्वा तत्र परमात्मना संयोज्य तद्दृष्ट्याऽमृतधारया देवीं प्रीणयित्वा देवीं प्रसन्नां विभाव्य स्वस्मिन्देव्यात्मैक्य

विभाव्यासनादिदीपान्तानुपचारान्प्रकल्पयेत् ॥ ( बाह्य नैवेद्यं न देयमिति संप्रदायः शिवो भूत्वा शिवं यजेदिति वचनात् ॥ ) अथ पीठपूजा ॥ मं मंडूकाय नमः ॥ कां कालाग्निरुद्राय नमः ॥ मूं मूलप्रकृत्यै नमः ॥ आं आधारशक्त्यै नमः ॥ कूं कूर्माय नमः ॥ अं अनंताय नमः ॥ वं वराहाय नमः ॥ धं धरित्र्यै नमः ॥ सुं सुधासिंधवे नमः ॥ रं रत्नद्वीपाय नमः ॥ मं मणिमंडपाय नमः ॥ कं कल्पतरवे नमः ॥ स्वं स्बर्णवेदिकायै नमः ॥ तदुपरि रत्नसिंहासनाय नमः ॥ आग्नेयादिकोणेषु ॥ धं धर्माय नमः ॥ ज्ञां ज्ञानाय नमः ॥ व वैराग्याय नमः ॥ ऐं ऐश्वर्याय नमः ॥ पूर्वादिदिक्षु ॥ अं अधर्माय नमः ॥ अं अज्ञानाय नमः ॥ अं अवैराग्याय नमः ॥ अं अनैश्वर्याय नमः ॥ मध्ये ॥ अं अनंताय नमः ॥ अं अंबुजाय नमः ॥ आं आनंदकन्दाय नमः ॥ सं सविन्नालाय नमः ॥ सं सर्वतत्त्वात्मकपद्माय नमः ॥ पं प्रकृतिमयपत्रेभ्यो नमः ॥ विं विकारमयकेशरेभ्यो नमः ॥ पं पंछाशद्वर्णकर्णिकायै नमः ॥ मं दशकलात्मने वह्निमंडलाय नमः ॥ अं द्वादशकलात्मने सूर्यमंडलाय नमः ॥ उं षोडशकलात्मने सोममंडलाय नमः ॥ सं सत्त्वाय नमः ॥ रं रजते नमः ॥ तं तमसे नमः ॥ आं आत्मने नमः ॥ अं अंतरात्मने नमः ॥ पं परमात्मने नमः ॥ ज्ञां ज्ञानात्मने नमः ॥ मां मायातत्त्वाय नमः ॥ कं कलातत्त्वाय नमः ॥ विं विद्यातत्त्वाय नमः ॥ पं परतत्त्वाय नमः ॥ एतान्युपर्युपरि ॥ पीठस्य पूर्वादिभागे । रां दीप्तायै नमः ॥ रीं सूक्ष्मायै नमः ॥ रूं जयायै नमः ॥ रें भद्रायै नमः ॥ रैं विभूत्यै नमः ॥ रों विमलायै नमः ॥ रौं अमोघायै नमः ॥ रं विद्युतायै नमः ॥ रः सर्वतोमुख्यै नमः ॥ पीठमध्ये ॥ परदेवतायै नमः ॥ तदुपरि बिंदुत्रिकोण वृत्तदलाष्टकरेखात्मकं चतुरस्रं चतुर्द्वारोपशोभितं यंत्र संस्थाप्य ब्रह्मविष्णुरुद्रबिंबात्मकसौरपीठाय नमः ॥ इति पीठ पूजयेत् ॥ इति पूजा समाप्ता ॥

अथ पूर्वोक्तऋष्यादिन्यासं कृत्वा प्राणानायम्य मूलेन व्यापकं गायत्र्युच्चारपूर्वकं हस्ता भ्यां पुष्पांजलि गृहीत्वा नासारंध्रेण पुष्पसंचयकल्पितयंत्रमये कल्पितमूर्तिं निक्षिप्य तत्तत्स्थानगतानि आवरणानि ध्यात्वा आवाहनादिमुद्राः प्रदर्श्याऽऽवाहनं सन्निधापनं इहावाहिता भव ॥ पुष्पेण देव्या हृदि करं निधाय " आं ह्रीं क्रौं " इति द्वादशवारं जपेत् ॥ ततो भूतशुद्धिं प्राणप्रतिष्ठां विधाय पूजयेत् ॥ " नमः " इतिमंट्रेण देव्याः पादांबुजे पाद्यं दद्यात् ॥ " स्वाहे " तिमंत्रेण मूर्ध्न्यर्घ्यं " वमि " ति मंत्रेण मुखे आचमनम् ॥ ततः स्नानशालायां सुगंधिसलिलैः स्नापयित्वा मूलेन शतसंख्येन वा राजोपचारैः सम्पूज्य देवतां प्रसन्नां नमः ॥ नैरृत्यकोणे सावित्र्यै नमः ॥ वायव्यकोणे सरस्वत्यै नमः ॥ त्रिकोणांतरालेषु ब्रह्मणे नमः ॥ विष्णवे नमः ॥ रुद्राय नमः ॥ वायव्यकोणे सरस्वत्यै नमः ॥ त्रिकोणांतरालेषु ब्रह्मणे नमः ॥ विष्णवे नमः ॥ रुद्राय नमः ॥ मूलेन पुष्पांजलिं गृहीत्वा ॥ " अभीष्टसिद्धिं मे देहि शरणागतवत्सले ॥ भक्त्या समर्पये तुभ्यं प्रथमावरनार्चनम् ॥ " अनेन पुष्पांजलिं दद्यात् ॥ ततो द्वितीयावरणम् ॥ अष्टदलेषु पूर्वादिदिक्षु ॥ ॐ आदित्याय नमः ॥ भानवे नमः ॥ भास्कराय नमः ॥ रवये नमः ॥ आग्नेयादिकेशरेषु ॥ उषायै नमः ॥ प्रज्ञायै नमः ॥ प्रभायै नमः ॥ संध्यायै नमः ॥ मूलमुच्चरन् " अभीष्टसिद्धिं मे देहि० " इति पुष्पांजलिं दद्यात् ॥ इति द्वितीयावरणम् ॥ अथ तृतीयम् ॥ हृदि ब्रह्मणे नमः । हृदयाय नमः ॥ शिरसि विष्णवे नमः । शिरसे स्वाहा ॥ ईशाने रुद्राय नमः । शिखायै वषट् ॥ नैरृत्ये ईश्वराय नमः । कवचाय हुम् ॥ वायव्ये सदाशिवाय नमः । नेत्रत्रयाय वौषट् ॥ आग्नेये सर्वात्मने नमः । अस्त्राय फट् ॥ तत्तद्देवताभ्यो नमः ॥ मूलेन । " अभीष्ट० " ॥ इति तृतीयावरणम् ॥ अथ चतुर्थम् ॥ तद्बहिः पूर्वाद्यष्टदलेषु ॥ ॐ अमृतायै नमः ॥ नित्यायै नमः ॥

विश्वंभरायै नमः ॥ ईशान्यै नमः ॥ प्रभायै नमः ॥ जयायै नमः ॥ विजयायै नमः ॥ शांत्यै नमः ॥ मूलेन पुष्पांजलिम् " अभीष्टसिद्धिं० " ॥ इति चतुर्थावरणम् ॥ अथ पंचमम् ॥ तद्बहिः पूर्वाद्यष्टदिक्षु ॥ ॐकांत्यै नमः ॥ दुर्गायै नमः ॥ सरस्वत्यै नमः ॥ विश्वरूपायै नग्नः ॥ विशालायै नमः ॥ ईशानायै नमः ॥ व्यापिन्यै नमः ॥ विमलायै नमः ॥ मूलमुच्चरन् " अभीष्टसिद्धिं० " इति पुष्पांजलिं दद्यात् ॥ इति पंचमावरणम् ॥ अथ षष्ठम् ॥ पूर्वाद्यष्टदिक्षु ॥ ॐ तमोपहारिण्यै नमः ॥ सूक्ष्मायै नमः ॥ विश्वयोन्यै नमः ॥ जयावहायै नमः ॥ पद्मालयायै नमः ॥ परायै नमः ॥ शोभायै नमः ॥ पद्मरूपायै नमः । मूलेन पुष्पांजलिम् " अभीष्टसिद्धिं० " इति षष्ठावरणम् ॥ अथ सप्तमम् ॥ पूर्वाद्यष्टदिक्षु ॥ ॐआं ब्राह्म्यै नमः ॥ ॐ ईं माहेश्वर्यिअ नमः ॥ ॐ ऊं कौमार्यै नमः ॥ ॐॠं वैष्णव्यै नमः ॥ ॐलृं वाराहयै नमः ॥ ओं इन्द्राण्यै नमः ॥ ॐऔं चामुंडायै नमः ॥ ॐअः अरुणायै नमः ॥ मूलमुच्चार्य " अभीष्ट० " पुष्पांजलिं दद्यात् ॥ इति सप्तमावरणम् ॥ अथाष्टमावरणम् ॥ मध्ये तद्बहिः पूर्वाद्यष्टदिक्षु ॥ सूं सूर्याय नमः ॥ ॐसों सोमाय नमः ॥ ॐभौं भौमाय नमः ॥ ॐबुं बुधाय नमः ॥ ॐगुं गुरवे नमः ॥ ॐशुं शुक्राय नमः ॥ ॐशं शनैश्चराय नमः ॥ ॐरां राहवे नमः ॥ ॐकें केतवे नमः ॥ मूलेन " अभीष्ट० " पुष्पांजलिं दद्यात् ॥ इत्यष्टमावरणम् ॥ अथ नवमम् ॥ पूर्वादिदशदिक्षु ॥ ॐलं इंद्राय नमः ॥ ॐरं अग्नये नमः ॥ ॐयं यमाय नमः ॥ ॐक्षं निरृतये नमः ॥ ॐवं वरुणाय नमः ॥ ॐयं वायवे नमः ॥ ॐसं सोमाय नमः ॥ ॐईं ईशानाय नमः ॥ ॐब्रं ब्रह्मणे नमः ॥ ॐअं अनंताय नमः ॥ मूलेन " अभीष्ट० " पुष्पांजलिं दद्यात् ॥ इति नवमारणम् ॥ अथ दशमम् ॥ ॐवं वज्राय नमः ॥ शं शक्तये नमः ॥ ॐदं दंडाय नमः ॥ ॐखं खड्गाय नमः ॥ ॐपां पाशाय नमः ॥ अं अंकुशाय नमः ॥ ॐगं गदायै नमः ॥ ॐत्रिं त्रिशूलाय नमः ॥ ॐचं चक्राय नमः ॥ ॐअं अंबुजाय नमः ॥ मूलेन " अभीष्ट० " पुष्पांजलि दद्यात् ॥ इति दशमावरणम् ॥ पुनः पंचोपचारैः संपूज्य नीराजनं पुष्पांजलिं दत्त्वा यस्य स्मृत्येति पूजां समर्प्य जपफलं देव्याः करे समर्प्य पुष्पांजलिं दत्त्वा क्षमाप्य स्वहृदि उद्वास्य पुनरृष्यादि न्यासं कृत्वा निर्माल्यं विसृजेत् ॥ इति नित्यपूजापद्धतिः समाप्ता ॥ अथनैमित्तिकमाह ॥ गुरुजन्मदिवसे स्वजन्मदिवसे जन्मनक्षत्रे विद्याप्राप्तिदिवसे पूर्णायां व्यतीपाते वा विशेष्यं पूजयेत् ॥ इति नैमित्तिकम् ॥ अथ पुरश्चरणविधिः ॥ कर्ता स्वशक्त्या गुरुं संपूज्य तदनुज्ञया देहशुद्ध्यर्थं चांद्रायणं प्राजापत्यं वा समाचरेत् ॥ पुरश्चरणदिवसे सुगंधसलिलैः स्नात्वा पूजाप्रदेशे चतुरस्रं चतुर्द्वारं मंडपं विधाय हृष्टधीर्वाङ्नियमितो मिताहारो जितेंद्रियः प्रातरारभ्यामध्याह्नं जपेत् ॥ एं च चतुर्विंशतिलक्षं जपेत् ॥ तदुक्तम् ॥ उक्तलक्षविधानेन कृत्वा विप्रो जितेन्द्रियः ॥ क्षीरौदनं तिलं दूर्वाक्षीरद्रुमसमिद्द्रुमान् ॥ अष्टद्रव्येण च पृथक्सहस्रत्रितयं हुनेत् ॥ मंत्रफलसिद्ध्यै जपदशांशहोमः ॥ तद्दशांशेन तर्पणम् ॥ तद्दशांशेन मार्जनम् ॥ तद्दशांशेन ब्राह्मणभोजनम् ॥ इति पुरश्चरणविधिः ॥ अथ काम्यमुच्यते ॥ विद्यार्थी वाग्भवाद्यां लक्ष्मीकामः श्रीबीजं वश्यार्थे कामबीजं सर्वकामार्थे मायाबीजम् आयुःकामार्थे मृत्युंजयं चतुरक्षरीसहितं जपेत ॥ इति काम्यविधिः ॥ तत्त्वसंख्यासहस्राणि समंत्रं जुहुयात्तिलैः ॥ सर्वपापविनिर्मुक्तो दीर्घमायुश्च विंदति ॥ आयुष्यं साज्यहविषा केवलेनाथ सर्पिषा ॥ पर्वांकितैस्तिलैर्मंत्री जुहुयात्त्रिसहस्रकम् ॥ अरुणाक्षैस्त्रिमध्वाज्यैः प्रसूनैर्ब्रह्मवृक्षजैः ॥ बहुना किमिहोक्तेन यथावत्साधु साधिता ॥ द्विजन्मनामियं विद्या सिद्धकामदुहा स्मृता ॥ इति श्रीगायत्रीपद्धतिः संपूर्णा ॥

# श्रीगायत्र्युपनिषत् (हृदयम्)

नमस्कृत्य भगवान् याज्ञवल्क्यः स्वयं परिपृच्छति । त्वं ब्रूहि भगवन् गायत्र्या उत्पत्तिं श्रोतुमिच्छामि ॥ ब्रह्मोवाच ॥ प्रणवेन व्याहृतयः प्रवर्तंते । तमसस्तु परं ज्योतिष्कः पुरुषः स्वयम् ॥ भूर्विष्णुरिति ह ताः स्वांगुल्या मथेत् । मथ्यमानात्फेनो भवति । फेनाद् बुद्वुदो भवति । बुद्बुदादंडं भवति । अंडवानात्मा भवति । आत्मनः आकाशो बह्वति । आकाशाद्वयुर्भवति । वायोरग्निर्भवति । अग्नेरोंकारो बह्वति । ॐकारद्व्याहृतिर्भवति । व्याहृत्या गायत्री भवति । गायत्र्याः सावित्री भवति । सावित्र्याः सरस्वती भवति । सरस्वत्या वेदा भवंति । वेदेभ्यो ब्रह्मा भवति । ब्रह्मणो लोका भवंति । तस्माल्लोकाः प्रवर्त्तंते । चत्वारो भवंति । वेदेभ्यो ब्रह्मा भवति । ब्रह्मणो लोका भवंति । तस्माल्लोकाः प्रवर्त्तंते । चत्वारो वेदाः सांगाः सोपनिषदः सेतिहासास्ते सर्वे गायत्र्याः प्रवर्त्तंते ॥ यथाग्निर्देवानां ब्राह्मणो मनुष्यानां मेरुः शिखरिणां गंगा नदीनां वसंत ऋतूनां ब्रह्मा प्रजापतीनामेवासौ मंत्राणां मुख्यः ॥ गायत्र्या गायत्री छंदो भवति ॥ किं भूः किं भुवः किं स्वः किं महः किं जनः किं तपः किं सत्यं किं तत् किं सवितुः किं बरेण्यं किं भर्गः किं देवस्य किं धीमहि किं धियः किं यः किं नः किं प्रचोदयात् । भूरीति भूर्लोकः । भुव इत्यंतरिक्षलोकः । स्वरिति स्वर्लोकः । मह इति महर्लोकः । जन इति जनो लोकः । तप इति तपि लोकः । सत्यमिति सत्यलोकः ॥ भूर्भुवः स्वरोमिति त्रैलोक्यम् ॥ तदसौ तेजः यत्तेजसोऽग्निर्देवता सवितुरित्यादित्यस्य वरेण्यमित्यन्नम् ॥ अन्नमेव प्रजापतिः ॥ भर्ग इत्यापः । आपो वै भर्गः । एतावत्सर्वा देवताः देवस्येंद्रो वै दैवयीद्देवं तदिंद्रस्तस्मात्सर्वकृत् पुरुषो नाम विष्णुः । धीमहीत्यंतरात्मा यदन्तरात्मा स प्रणवः । धिय हत्यध्यात्मम् । किमध्यात्मं तत्परमं पदमित्यध्यात्मम् । यो न इति पृथिवी वै यो नः प्रचोदयात् काम इमांल्लोकान् प्रच्यवयन् यो नृशंस्योस्तोष्यस्तत्परमो धर्मः इत्येषा गायत्री ॥ याज्ञवल्क्य उवाच ॥ किंगोत्रा कत्यक्षरा कतिपदा कतिकुक्षिः कतिशीर्णा ॥ ब्रह्मोवाच ॥ सांख्ह्यायनसगोत्रा गायत्री । चतुर्विंशत्यक्षरा । त्रिपदा । षट्कुक्षिः । सावित्रीकेशास्त्रयः पादा भवंति ॥ कास्याः कुक्षिः । कानि पंच शीर्षाणि । ऋग्वेदोऽस्याः प्रथमः पादो भवति । यजुर्वेदो द्वितीयः । सामवेदस्तृतीयः । पूर्वा दिक्प्रथमा कुक्षिर्भवति । दक्षिणा द्वितीया । पश्चिमा तृतीया । उदीची चतुर्थी । ऊर्ध्वा पंचमी । अधरा षष्ठी कुक्षिः ॥ व्याकरणमश्याः प्रथमं शीर्ष भवति । शिक्षा द्वितीयम् । कल्पस्तृतीयम् । निरुक्तं चतुर्थम् । ज्योतिषामयनं पंचमम् ॥ किं लक्षणम् । किमु चेष्टितम् । किमुदाहृतम् । किमक्षरं दैवत्यम् ॥ लक्षणं मीमांसा। अथर्ववेदो विचेष्टितम् । छंदोविधिरित्युदाहृतम् ॥ को बर्णः । कः स्वरः । श्वेतो वर्णः । षट् स्वराणि इमान्यक्षराणि दैवतानि भवंति । पूर्वा भवति गायत्री । मध्यमा सावित्री । पश्चिमा संध्या सरस्वती ॥ प्रातःसंध्या रक्ता रत्कापक्षासनस्था रक्तांबरधरा । रक्तवर्णा रक्तगंधानुलेपना चतुर्मुखा अष्टभुजा द्रिनेत्रा दंडाक्षमालाकमंडलुस्रुक्स्त्रुवधारिणी सर्वाभरणभूषिता गायत्री कौमारी ब्राह्मी हंसवाहिनी ऋग्वेदसंहिता ब्रह्मदेवत्या त्रिपदा गायत्री षट्कुक्षिः पंचशीर्षा अग्निमुखा रुद्रशिखा ब्रह्महृदया ब्रह्मकवचा सांख्यायनसगोत्रा भूर्लोकव्यापिनी अग्निस्तत्त्वम् उदात्तानुदात्तस्वरितस्वरमकारः रक्तवर्णः आत्मज्ञाने विनियोगः ॥ इत्येषा गायत्री ॥ मध्याह्नसंध्या श्वेता श्वेतपद्मासनस्था श्वेतांबरधरा श्वेतवर्णा श्वेतगंधानुलेपना पंचमुखी दशभुजा त्रिनेत्रा शूलाक्षमालाकमंडलुकपालधारिणी सर्वाभरणभूषिता सावित्री युवती माहेश्वरी वृषभवाहिनी यजुर्वेदसंहिता रुद्रदेवत्या त्रिपदा सावित्री षट्कुक्षिः पंचशीर्षा अग्निमुखा रुद्रशिखा रुद्रहृदया ब्रह्मकवचा भारद्वाजसगोत्रा ब हुवर्लोकव्यापिनी वायुस्तत्त्वम् उदात्तानुदात्तस्वरितस्वरमुकारः श्वेतवर्णः आत्मज्ञाने विनियोगः ॥ इत्येषा सावित्री ॥ सायंसंध्या कृष्णा कृष्णपद्मासनस्था कृष्णांबरधरा कृष्णवर्णा कृष्णगंधानुलेपना एकमुखी चतुर्भुजा द्रिनेत्रा शंखचक्रगदापद्मधारिणी सर्वाभरणभूषिता सरस्वती वृद्धा वैष्णवी गरुडवाहिनी सामवेदसंहिता विष्णुदेवत्या त्रिपदा षट्कुक्षिः पंचशीर्षा अग्निमुखा रुद्रशिखा त्तस्वरितमकारः कृष्णवर्णो मोक्षज्ञाने विनियोगः । इत्येषा सरस्वती ॥ रक्ता गायत्री श्वेता सावित्री कृष्णवर्णा सरस्वती ॥ प्रणवो नित्ययुक्तश्च व्याहृतीषु च सप्तसु ॥ सर्वेषा मेव

पापानां संकरे समुपस्थिते ॥१॥
दश शतं समभ्यर्च्य गायत्री पावनी महत्॥
प्रहलादोऽत्रिर्वशिष्ठश्च शुकः कण्वः पराशरः ॥२॥
विश्वामित्रो महातेजाः कपिलः शौनको महान् ॥
याज्ञवल्क्यो भरद्वाजो जमदग्निस्तपोनिधिः ॥३॥
गौतमो मुद्गलः श्रेष्ठो वेदव्यासश्च लोमशः ॥ अगस्त्यः
कौशिको वत्सः पुलस्त्यो मांडुकस्तथा ॥४॥
दुर्वासाप्तपसा श्रेष्ठो नारदः कश्यपस्तथा ॥ उत्कात्युक्ता
तथा मध्या प्रतिष्ठान्या सुपूर्विका ॥५॥
गायत्र्युष्णिगनुष्टुप् च बृहती पंक्तिरेवच ॥ त्रिष्टुप् च
जगती चैव तथातिजगती मता ॥६॥
शक्करी सातिपूर्वा स्यादष्ट्यत्यष्टी तथैवच ॥
घृतिश्चातिधृतिश्चैव प्रकृतिः कृतिराकृतिः ॥७॥
इत्येताश्छंदसां संज्ञाः क्रमशो वच्मि सांप्रतम् ॥८॥
भूरिति च्छंदः भुव इतिच्छंदः स्वरिति च्छंदो भूर्भुवः
स्वरोमिति देवी गायत्री इत्येतानि च्छंदासि ॥
प्रथममाग्नेयं द्वितीयं प्राजापत्यं तृतीयं सौम्य
चतुर्थमैशानं पंचममादित्यं षष्ठं बार्हस्पत्यं सप्तमं
पितृदेवत्यमष्टमं भगदेवत्यं नवममार्यमं दशमं
सावित्रमेकादशं त्वाष्ट्रं द्वादशं पौष्णं त्रयोदशमैन्द्राग्न्यं
चतुर्दशं वायव्यं पंचदशं वामदेवत्यं षोडशं मैत्रावरुणं
सप्तदशमांगिरसमष्टादशं वैश्वदेव्यमेकोनविंशं वैष्णवं
विंशं वासवमेकविंशं रौद्रं द्वाविंशमाश्विनं त्रयोविंशं ब्राह्मं
चतुर्विंशं सावित्रम् ॥ दीर्घान्स्वरेण
संयुक्तान्बिन्दुनादसमन्वितान् ॥
व्यापकान्विन्यसेत्पश्चाद्दशपंक्त्यक्षराणि च ॥९॥
ढुबुंपुस इति प्रत्यक्षबीजानि ॥ प्रल्हादिनी प्रभा सत्या
विश्वा भद्रा विलासिनी ॥ प्रभावती जया कांता शांता
पद्मा सरस्वती ॥१०॥
विद्रुमस्फटिकाकारं पद्मरागसमप्रभम् ॥ अञ्जनाभं च
गांगेयं वैदूर्यं चंद्रसन्निभम् ॥११॥
हारिद्रं कृष्णदुग्धाभं रविकांतिसमं भवम् ॥
शुकपिच्छसमाकारं क्रमेण परिकल्पयेत् ॥१२॥
पृथिव्यापस्तथा तेजो वायुराकाश एवच ॥ गंधो रसश्च
रूपं च शब्दः स्पर्शस्तथैवच ॥१३॥
घ्राणं जिह्वा च चक्षुश्च त्वक्छ्रोत्रं च तथापरम् ॥
उपस्थपायुपादादि पाणिर्वागपि च क्रमात् ॥१४॥
मनो बुद्धिरहंकारमव्यक्तं च यथाक्रमम् ॥ सुमुखं संपुटं
चैव विततं विस्तृतं तथा ॥ ( एकमुखं च ) द्विमुखं
त्रिमुखं च चतुर्मुखम् ॥१५॥
पंचमुखं षण्मुखं चाधोमुखं चैव व्यापकम् ॥ अंजलीकं
ततः ( प्रोक्तं मुद्रितं तु त्रयोदशम् ॥ ) ॥१६॥
शकटं यमपाशं च ग्रथितं संमुखोन्मुखम् ॥ प्रलंबं
मुष्टिकं चैव मत्स्यः कूर्मोवराहकम् ॥१७॥
सिहाक्रांतं महाक्रांतं मुद्गरं पल्लवं तथा ॥ एता
मुद्राश्चतुर्विंशद्गायत्र्याः सुप्रतिष्ठिताः ॥१८॥
ॐमूर्ध्नि संघाते ब्रह्मा विष्णुर्ललाटे रुद्रो भ्रूमध्ये
चक्षुषोश्चंद्रादित्यौ कर्णयोः शुक्रबृहस्पती नासिके
वायुदैवत्यं प्रभातं दोषा उभे संध्ये मुखमग्निर्जिह्वा
कर्णयोः शुक्रब्रह्मस्पती नासिके वायुदैवत्यः प्रभातं दोषा
उभे संध्ये मुखमग्निर्जिह्वा सरस्वती ग्रीवा स्वाध्याया
स्तनयोर्वसवः बाह्वोर्मरुतः हृदयं पर्जन्यमाकाशमपरं
नाभिरं तरिक्षं कटिरिंद्रियाणि जघनं प्राजापत्यं
कैलासमलयौ ऊरू विश्वेदेवा जानुभ्यां जान्वोः कुशिकौ
जंघयोरयनद्वयम् खुरः पितरः पादौ पृथिवी वनस्पतिः
गुल्फौ रोमाणि मुहूर्तास्ते विग्रहाः केतुमासा ऋतवः
संध्याकालत्रयमाच्छादनं संवत्सरो निमिषः
अहोरात्रादित्यश्चंद्रमाः । सहस्रपरमां देवीं शतमध्यां
दशापराम् ॥ सहस्रनेत्री देवी गायत्री शरणमहं प्रपद्ये ॥
तत्सवितुर्वरदाय नमः तत्प्रातरादित्याय नमः ॥
सायमधीयानो दिवसकृतं पापं नाशयति । प्रारधीयानो
रात्रिकृतं पापं नाशयति । तत्सायं प्रातः प्रयुंजानो अपापो
भवति । य इदं गायत्रीहृदयं ब्राह्मणः प्रयतः पठेत्
चत्वारो वेदा अधीता भवंति । सर्वेषु तीर्थेषु स्नातो
भवति । सर्वैर्देवैर्ज्ञातो भवति । सर्वप्रतिप्रत्युहजात्पूतो
भवति । अपेयपात्पूतो भवति । अभक्ष्यभक्षणात्पूतो
भवति । अलेह्यलेहात्पूतो अचोष्यचोषणात्पूतो भवति ॥
सुरापानात्पूतो भ० ॥ सुवर्णस्तेयात्पूतो भवति ॥
पंत्किभेदनात्पूतो भ० ॥ पतितसंभाषणात्पूतो भ० ॥
अनृतवचनात्पूतो भ० ॥ गुरुतल्पगमनात्पूतो भ० ॥
अगम्यागमनात्पूतो भ० ॥ वृषलीगमनात्पूतो भ० ॥
ब्रह्महत्यायाः पूतो० ॥ भ्रूणहत्यायाः पूतो० ॥ वेरहत्यायाः
पूतो भ० ॥ अब्रह्मचारी सुब्रह्मचारी भवति । अनेन
हृदयेनाधीतेन क्रतुशतेनेष्टं भवति । षष्टिसहस्रगायत्री
जप्यानि भव्म्ति ॥ अष्टौ ब्राह्मणान्ग्राहयेत्
अर्थसिद्धिर्भवति । य इदं गायत्रीहृदयं बाह्मणः प्रयतः
पठेत् ॥ सर्वपापैः प्रमुच्यते ब्रह्मलोके महीयते ब्राह्मलोके
महीयत इति ॥ इति श्रीगायत्र्युपनिषत्संपूर्णा ॥

# श्रीगायत्रीकवचम्

श्रीगणेशाय नमः ॥ याज्ञवल्क्य उवाच ॥ स्वामिन्सर्वजगन्नाथ संशयोऽस्ति महान्मम ॥ चतुष्पष्टिकलानां च पातकानां च तद्वद ॥१॥ मुच्यते केन पुण्येन ब्रह्मरूपं कथं भवेत् ॥ देहश्च देवतारूपं मंत्ररूपं विशेषतः ॥२॥ क्रमतः श्रोतुमिच्छामि कवचं विधिपूर्वकम् ॥ ब्रह्मोवाच ॥ गायत्र्याः कवचस्यास्य ब्रह्मा विष्णुः शिवो ऋषिः ॥३॥

ऋग्यजुःसामाथर्वाणि च्छंदांसि परिकीर्त्तिताः ॥ परब्रह्मस्वरूपा सा गायत्री देवता स्मृता ॥४॥ रक्षाहीनं तु यत्स्थानं कवचेन विना कृतम् ॥ सर्वं सर्वत्र संरक्षेत्सर्वांगं भुवनेश्वरी ॥५॥ बीजं भर्गश्च युक्तिश्च धियः कीलकमेव च ॥ पुरुषार्थविनियोगो यो नश्च परिकीर्तितः ॥६॥ ऋषिं मूर्ध्नि न्यसेत्पूर्वं मुखे छंद उदीरितम् ॥ देवता हृदि विन्यस्य गुह्ये बीजं नियोजयेत् ॥७॥ शक्तिं पदोस्तु विन्यस्य नाभौ तु कीलकं न्यसेत् ॥ द्वात्रिंशत्तु महाविद्याः सांख्यायनसगोत्रजाः ॥८॥ द्वादशलक्षसंयुक्ता विनियोगः पृथवपृथक् ॥ एवं न्यासविधिंकृत्वा करांगं विधिपूर्वकम् ॥९॥ व्याहृतित्रयमुच्चार्य अनुलोमविलोमतः ॥ चतुरक्षरसंयुक्तं करांगन्यासमाचरेत् ॥१०॥ आवाहनादिभेदं च दश मुद्राः प्रदर्शयेत् ॥ सा पातु वरदा देवी अंगप्रत्यंगसंगमे ॥११॥ ध्यानं मुद्रां नमस्कारं गुरुमंत्रं तथैव च ॥ संयोगमात्मसिद्धिञ्च षड्विधं किं विचारयेत् ॥१२॥ अस्य श्रीगायत्रीकवचस्य ब्रह्मविष्णुरुद्रा ऋषयः ऋग्यजुःसामाथर्वाणि छंदांसि परब्रह्मस्वरूपिणी गायत्री देवता भूः बीजं भुवः शक्तिः स्वाहा कीलकं श्रीगायत्रीप्रीत्यर्थं जप विनियोघ ॥ वर्णास्त्रां कुंडिकाहस्तां शुद्धनिर्मलज्योतिषीम् ॥ सर्वतत्त्वमयीं वन्दे गायत्रीं वेदमातरम् ॥१३॥

अथ ध्यानम् ॥

क्मुक्ताविद्रुमहेमनीलधवलच्छाअयैर्मुखैस्त्रीक्षणैर्युक्तामिंदु निबद्धरत्नमुकुटां तत्त्वार्थवराण्त्मिकाम् ॥ गायत्रीं वरदाभयांकुशकशाः शुभ्रं कपालं गुणं शंखं चक्रमथारविंदयुगलं हस्तैर्वहंतीं भजे ॥१॥

ॐगायत्री पूर्वतः पातु सावित्री पातु दक्षिणे ॥ ब्रह्मविद्या च मे पश्चादुत्तरे मां सरस्वती ॥१॥ पावकीं मे दिशं रक्षेत्पावकोज्ज्वलशालिनी ॥ यातुधानीं दिशं रक्षेद्यातुधानगणार्दिनी ॥२॥ पावमानीं दिशं रक्षेत्पवमानविलासिनी ॥ दिशं रौद्रीमवतु मे रुद्राणी रुद्ररूपिणी ॥३॥ ऊर्ध्वं ब्रह्माणि म रक्षेदधस्ताद्वैष्णवी तथा ॥ एवं दश दिशो रक्षेत्सर्वतो भुवनेश्वरी ॥४॥ ब्रह्मास्त्रस्मरणादेव वाचां सिद्धिः प्रजायते ॥ ब्रह्मदण्डश्च मे पातु सर्वशस्त्रास्त्रभक्षकः ॥५॥ ब्रह्मशीर्षस्तथा पातु शत्रूणां वधकारकः ॥ सप्त व्याहृतयः पांतु सर्वदा बिंदुसंयुताः ॥६॥ वेदमाता च मां पातु सरहस्या सदैवता ॥ देवीसूक्तं सदा पातु सहस्राक्षरदेवता ॥७॥ चतुष्पष्टिकलाविद्या दिव्याद्या पातु देवता ॥ बीजशक्तिश्च मे पातु पातु विक्रमदेवता ॥८॥ तत्पदं पातु मे पादौ जंघे मे सवितुः पदम् ॥ वरेण्यं कटिदेशं तु नाभिं भर्गस्तथैव च ॥९॥ देवस्य मे तु हृदयं धीमहीति गलं तथा ॥ धियो मे पातु जिह्वायां यः पदं पातु लोचने ॥१०॥ ललाटे नः पदं पातु मूर्द्धानं मे प्रचोदयात् ॥ तद्वर्णः पातु मूर्धानं सकारः पातु भालकम् ॥११॥ चक्षुषी मे विकारस्तु श्रोत्रं रक्षेतुकारकः ॥ नासापुटेर्वकारो मे रेकारस्तु कपोलयोः ॥१२॥ णिकारस्त्वधरोष्टे च यकारस्तूर्ध्व ओष्ठके ॥ आस्यमध्ये भकारस्तु गोकारस्तु कपोलयोः ॥१३॥ देकारः कंठदेशे च वकारः स्कंधदेशयोः ॥ स्यकारो दक्षिणं हस्तं धीकारो वामहस्तकम् ॥१४॥ मकारो हृदयं रक्षेद्धिकारो जठरं तथा ॥ धिकारो नाभिदेशं तु योकारस्तु कटीद्वयम् ॥१५॥ गुह्यं रक्षतु योकार ऊरू मे नः पदाक्षरम् ॥ प्रकारो

जानुनी रक्षेच्चोकारो जंघदेशयोः ॥१६॥
दकारो गुल्फदेशं तु यात्कारः पादयुग्मकम् ॥ जातवेदिति
गायत्री त्र्यंबकेति दशाक्षरा ॥१७॥
सर्वतः सर्वदा पातु आपो ज्योतीति षोडशी ॥ इदं तु
कवचं दिव्यं बाधाशतविनाशकम् ॥१८॥
चतुष्पष्टिकलाविद्यासकलैश्वर्य्यसिद्धिदम् ॥ जपारंभे च
हृदयं जपांते कवचं पठेत् ॥१९॥
स्त्रीगोब्राह्मणमिस्त्रादिरोहाद्यखिलपातकैः ॥ मुच्यते
सर्वपापेभ्यः परं ब्रह्माध्गच्छति ॥२०॥
पुष्पांजलिं च गायत्र्या मूलेनैव पठेत्सकृत् ॥
शतसाहस्रवर्षाणां पूजायाः फलमाप्नुयात् ॥२१॥
भूर्जपत्रे लिखित्वैतत्स्वकंठे धारयेद्यदि ॥ शिखायां दक्षिणे
बाहौ कंठे वा धारयेद् बुधः ॥२२॥
त्रैलोक्यं क्षोभयेत्सर्वं त्रैलोक्यं दहति क्षणात् ॥
पुत्रवान्धनवाञ्छ्रीमान्नानाविद्यानिधिर्भवेत् ॥२३॥
ब्रह्मास्त्रादीनि सर्वाणि तदंगस्पर्शनात्ततः ॥ भवंति तस्य
तुच्छानि किमन्यत्कथयामि ते ॥२४॥
अभिमंत्रितगायत्रीकवचं मानसं पठेत् ॥ तज्जलं पिबतो
नित्यं पुरश्चर्य्याफलं भवेत् ॥२५॥
लघुसामान्यकं मंत्रं महामंत्रं तथैव च ॥ यो वेत्ति धारणां
युञ्जञ्जीवन्मुक्तः स उच्यते ॥२६॥
सप्तव्याहृति विप्रेन्द्र सप्तावस्थाः प्रकीर्तिताः ॥
सप्तजीवशता नित्यं व्याहृती अग्निरूपिणी ॥२७॥
प्रणवे नित्ययुक्तस्य व्याहृतीषु च सप्तसु ॥ सर्वेषामेव
पापानां संकरे समुपस्थिते ॥२८॥
शतं सहस्रमभ्यर्च्य गायत्री पावनं महत् ॥
दशशतमष्टोत्तरशतं गायत्री पावनं महत् ॥२९॥
भक्तिभाजो भवेद्विप्रः संध्याकर्म समाचरेत् ॥ काले काले
प्रकर्त्तव्यं सिद्धिर्भवति नान्यथा ॥३०॥
प्रणवं पूर्वमृद्धृत्य भूर्भुवः स्वस्तथैव च ॥ तुर्येण सह
गायत्रीजप एवमुदाहृतम् ॥३१॥
तुरीयपादमुत्सृज्य गायत्रीं च जपेद् द्विजः ॥ स मूढो
नरकं याति कालसूत्रमधोगतिः ॥३२॥
मंत्रादौ जननं प्रोक्तं मंत्रान्ते मृतसूतकम् ॥
उभयोर्दोषनिर्मुक्तं गायत्री सफला भवेत् ॥३३॥
मंत्रादौ पाशबीजं च मंत्रांते कुशबीजकम् ॥ मंत्रमध्ये तु
या माया गायत्री सफला भवेत् ॥३४॥
वाचिकस्त्वहमेव स्यादुपांशु शतमुच्यते ॥ सहस्रं मानसं
प्रोक्तं त्रिविधं जपलक्षणम् ॥३५॥
अक्षमालां च मुद्रां च गुरोरपि न दर्शयेत् ॥ जपं
चाक्षररूपेणानामिकामध्यपर्वणि ॥३६॥
अनामा मध्यया हीना कनिष्ठादिक्रमेण तु ॥
तर्ज्जनीमूलपर्य्यंतं गायत्रीजपलक्षणम् ॥३७॥
पर्वभिस्तु जपेदेवमन्यत्र नियमः स्मृतः ॥
गायत्रीवेदमूलत्वाद्वेदः पर्वसु गीयते ॥३८॥
दशभिर्जन्मजनितं शतेनैव पुरा कृतम् ॥ त्रियुगं तु
सहस्राणि गायत्री हन्ति किल्बिषम् ॥३९॥
प्रातःकालेषु कर्तव्यं सिद्धिं विप्रो य इच्छति ॥ नादालये
समाधिश्च संध्यायां समुपासते ॥४०॥
अंगुल्यग्रेण यज्जप्तं यज्जप्तं मेरुलंघने ॥ असंख्यया च
यज्जप्तं तज्जप्तं निष्फलं भवेत् ॥४१॥
विना वस्त्रं प्रकुर्वीत गायत्री निष्फला भवेत् ॥ वस्त्रपुच्छं
न जानाति वृथा तस्य परिश्रमः ॥४२॥
गायत्रीं तु परित्यज्य अन्यमंत्रमुपासते ॥ सिद्धान्नं च
परित्यज्य भिक्षामटति दुर्मतिः ॥४३॥
ऋषिश्छंदो देवताख्या बीजं शक्तिश्च कीलकम् ॥ नियोगं
न च जानाति गायत्री निष्फला भवेत् ॥४४॥
वर्णमुद्राध्यानपदमावाहनविसर्ज्जनम् ॥ दीपं चक्रं न
जानाति गायत्री निष्फला भवेत् ॥४५॥
शक्तिन्यासस्तथा स्थानं मंत्रसंबोधनं परम् ॥ त्रिविधं यो
न जानाति गायत्री निष्फला भवेत् ॥४६॥
पंचोपचारकांश्चैव होमद्रव्यं तथैव च ॥ पंचांगं च विना
नित्यं गायत्री निष्फला भवेत् ॥४७॥
मंत्रसिद्धिर्भवेज्जातु विश्वामित्रेण भाषितम् ॥ व्यासो
वाचस्पतिर्जीवस्तुता देवी तपःस्मृतौ ॥४८॥
सहस्रजप्ता सा देवी ह्युपपातकनाशिनी ॥ लक्षजाप्ये
तथा तच्च महापातकनाशिनी ॥ कोटिजाप्येन राजेन्द्र
यदिच्छति तदाप्नुयात् ॥४९॥
न देयं परशिष्येभ्यो ह्यभक्तेभ्यो विशेषतः ॥ शिष्येभ्यो
भक्तियुक्तेभ्यो ह्यन्यथा मृत्युमाप्नुयात् ॥५०॥
इति श्रीमद्वसिष्ठसंहितायां श्रीगायत्रीकवचं सम्पूर्णम् ॥

# अथ श्रीगायत्रीपटलम्

ॐ अस्य श्रीब्रह्मशापविमोचनमंत्रस्य निग्रहानुग्रहकर्ता प्रजापतिरृषिः कामदुघा गायत्री छंदः ॥ ॐ ब्रह्मशापविमोचनी गायत्रीशक्तिर्देवता ब्रह्मशापविमोचनार्थे जपे विनियोगः ॥ सवितुः ब्रह्मो मेत्युपासनात्तद्ब्रह्मविदो विदुस्तां प्रयतंति धीराः ॥ सुमनसा वाचा ममाग्रतः ॥ गायत्री त्वं ब्रह्मशापाद्विमुक्ता भव ॥ ॐ विश्वामित्रशापविमोचनमंत्रस्य नूतनसृष्टिकर्ता विश्वामित्र ऋषिः ॥ वाग्देहा गायत्री छंदः ॥ भुक्तिमुक्तिप्रदा विश्वामित्रानुगृहीता गायत्री शक्तिः ॥ सविता देवता ॥ विश्वामित्रशपविमोचनार्थे जपे विनियोगः ॥ तत्त्वानि चांगेष्वग्निचितो धियांसः त्रिगर्भा युदुद्भवां देवाश्चोचिरे विश्वसृष्टिम् ॥ तां कल्याणीमिष्टकरीं प्रपद्ये यन्मुखान्निःसृतो वेदगर्भः ॥ ॐ गायत्री त्वं विश्वामित्रशापाद्विमुक्ता भव ॥ ॐ वसिष्ठशापविमोचनमंत्रस्य वसिष्ठ ऋषिः ॥ विश्वोद्भवा गायत्री छंदः ॥ वसिष्ठानुगृहीता गायत्रीशक्तिर्देवता ॥ वसिष्ठशापविमोचनार्थे जपे विनियोगः ॥ तत्वानि चांगेष्वग्निचितौ धियांसः ध्यायंति विष्णोरायुधानि बिभ्रत् ॥ जनानता सा परमं च शश्वत् गायत्री मासाच्छुरनुत्तमं च धाम ॥ ॐ गायत्री त्वं वसिष्ठशापाद्विमुक्ता भव ॥ सोऽहमर्कमहंज्योतिरर्कः ज्योतिरहं शिवः ॥ आत्मज्योतिरहं शुक्लं शुक्लं ज्योतिरसोहमोम् ॥ अहो विष्णुमहेशेशे दिव्ये सिद्धि सरस्वति ॥ अजरे अमरे चैव दिव्ययोनि नमोऽस्तु ते ॥ शुद्धं गायत्रीध्यानम् ॥ यद्वेवैः सुरपूजितं परतरं सामर्थ्यतारात्मकं पुन्नागाम्बुजपुष्पनागबकुलैः केशै शुकैरर्चितम् ॥ नित्यं ध्यानसमस्तदीप्तिकरणं कालाग्निरुद्दीपनं तत्संहारकरं नमामि सततं पातालसंस्थं मुखम् ॥ न्यास । ॐ तत्पादांगुलिपर्वभ्यां नमः ॥ ॐ स पादांगुलिभ्यो नमः ॥ ॐ वि जंघाभ्यां न० ॥ ॐ तुर्जानुभ्यां नमः ॥ ॐ व ऊरुभ्यां नमः ॥ ॐ रे शिश्नाय नमः ॥ ॐ णि वृषणाभ्यां नमः ॥ ॐ यं कट्यै नमः ॥ ॐ भर्नाभ्यै नमः ॥ ॐ गो उदराय नमः ॥ ॐ दे स्तनाभ्यां नमः ॥ ॐ व उरसे नमः ॥ ॐ स्य कण्ठाय नमः ॥ ॐ धी दंतेभ्यो नमः ॥ ॐ म तालुने नमः ॥ ॐ हि नासिकायै नमः ॥ ॐ धि नेत्राभ्यां नमः ॥ ॐ यो भ्रूभ्यां यो ललाटाय नमः ॥ ॐ नः पूर्वमुखाय नमः ॥ ॐ प्र दक्षिणमुखाय नमः ॥ ॐ चो पश्चिममुखाय नमः ॥ ॐ द उत्तरमुखाय नमः ॥ ॐ यात् मूर्ध्ने नमः ॥ इति वर्णन्यासः ॥ ॐ तत्सवितुरंगुष्ठाभ्यां नमः ॥ वरेण्यं तर्ज्जनीभ्यां नमः ॥ ॐ भर्गोदेवस्य मध्यमाभ्यां नमः ॥ ॐ धीमहि अनामिकाभ्यां नमः ॥ ॐ धियो यो नः कनिष्ठिकाभ्यां नमः ॥ ॐ प्रचोदयात् करतलकरपृष्ठाभ्यां नमः ॥ अथ देहन्यासः ॥ ॐ भूः पादयोः ॥ ॐ भुवः जान्वोः ॥ ॐ स्वः नाभौ ॥ ॐ महः हृदये ॥ ॐ जनः कण्ठे ॥ ॐ तपः ललाटे ॥ ॐ सत्यं मूर्ध्नि ॥ ॐ तत्पादयोः ॥ ॐ सवितुर्जान्वोः ॥ ॐ वरेण्यं स्कंधयोः ॥ ॐ भर्गो हृदये ॥ ॐ देवस्य कण्ठे ॥ ॐ धीमहि वक्त्रे ॥ ॐ धियो यो नेत्रे ॥ ॐ नः मुखे ॥ ॐ प्रचोदयात् ॥ अस्त्राय फट् ॥ ॐ आपः अंगुष्ठाभ्यां नमः ॥ ॐ ज्योतिस्तर्जनीभ्यां नमः ॥ ॐ रसो मध्यमाभ्यां नमः ॥ ॐ अमृतम् अनामिकाभ्यां नमः ॥ ॐ ब्रह्म कनिष्ठिकाभ्यां नमः ॥ ॐ भूर्भुवः स्वरोम् करतलकरपृष्ठाभ्यां नमः ॥ ॐ अग्नये हृदयाय नमः ॥ ॐ वायवे शिरसे स्वाहा ॥ ॐ सूर्याय शिखायै वषट् ॥ ॐ ब्रह्मणे कवचाय हुम् ॥ ॐ विष्णवे नेत्रत्रयाय वौषट् ॥ ॐ रुद्राय अस्त्राय फट् ॥ इति न्यासः ॥ अथ वेदादिगीतायाः प्रसादजननं विधिम् ॥ गायत्र्याः संप्रवक्ष्यामि धर्मार्थकाममोक्षदम् ॥१॥
नित्यनैमित्तिके काम्ये तृतीये तपवर्द्धने ॥ गायत्र्यास्तु परं नास्ति इह लोके परत्र च ॥२॥
मध्याह्ने मितभुङ्मौनी त्रिस्थानार्चनतत्परः ॥ जपेल्लक्षत्रयं धीमान्नान्यमानसकस्तु यः ॥३॥
कर्मभिर्यो जपेत्पश्चात्क्रमशः स्वेच्छयापि वा ॥ यावत्कार्यं न कुर्वीत न लोपेत्तावता व्रतम् ॥४॥
आदित्यस्योदये स्नात्वा सहस्रं प्रत्यहं जपेत् ॥ आयुरारोग्यमैश्वर्यं धनं च लभते ध्रुवम् ॥५॥

त्रिरात्रोपोषितः सम्यग्घृतं हुत्वा सहस्रशः ॥ सहस्रं लाभमाप्नोति हुत्वाग्नौ खदिरेंधनम् ॥६॥
पालाशैः समिधैश्चैव घृताक्तानां हुताशने ॥ सहस्रं लाभमाप्नोति राहुसूर्यसमागमे ॥७॥
हुत्वा तु खदिरं वह्नौ घृताक्तं रक्तचन्दनम् ॥ सहस्रहेममाप्नोति राहुचन्द्रसमागमे ॥८॥
रक्तचन्दनमिश्रं तु सघृतं हव्यवाहने ॥ हुत्वा गोमयमाप्नोति सहस्रं गोमयं द्विजः ॥९॥
जातीचंपकराजार्ककुसुमानां सहस्रशः ॥ हुत्वा वस्त्रमवाप्नोति घृताक्तानां हुताशने ॥१०॥
सोर्यमंडलबिम्बे च हुत्वा तोयं सहस्रशः ॥ सहस्रं प्राप्नुयाद्धैमं रौप्यमिंदुमये हुते ॥११॥
अलक्ष्मीपापसंयुक्ते मलव्याधिविनाशके ॥ मुच्येत्सहस्रजाप्येन स्नायाद्यस्तु जलेन वै ॥१२॥
गोघृतेन सहस्रेण लोध्रेण जुहुयुआद्यदि ॥ चौराग्निमारुतोत्थानि भयानि न भवंति वै ॥१३॥
क्षीराहारो जपेल्लक्षमपमृत्युमपोहति ॥ घृताशी प्राप्नुयान्मेधां बहुविज्ञानसंचयात् ॥१४॥
हुत्वा वेतसपत्राणि घृताक्तानि हुताशने ॥ लक्षाधिपस्यपदवीं सार्वभौमं न संशयः ॥१५॥
लक्षेण भस्महोमस्य हुत्वा ह्युत्तिष्ठते जलात् ॥ आदित्याभिमुखं स्थित्वा नाभिमात्रजले शुचौ ॥१६॥
गर्भपातादिप्रदराश्चान्ये स्त्रीणां महारुजः ॥ नाशमेष्यंति ते सर्वे मृतवत्सादिदुःखदाः ॥१७॥
तिलानां लक्षहोमेन घृताक्तानां हुताशने ॥ सर्वकामसमृद्धात्मा परं स्थानमवाप्नुयात् ॥१८॥
यवानां लक्षहोमेन घृताक्तानां हुताशने ॥ सर्वकामसमृद्धात्मा परां सिद्धिमवाप्नुयात् ॥१९॥
घृतस्याहुतिलक्षेण सर्वान्कामानवाप्नुयात् ॥ पंचगव्याशनो लक्षं जपेज्जातिस्मृतिर्भवेत् ॥२०॥
तदैव ह्यनले हुत्वा प्रपनोति वहुसाधनम् ॥ अन्नादिहवनान्नित्यमन्नाद्यं च भवेत्सदा ॥२१॥
जुहुयात्सर्वसाध्यानामाहुत्यायुतसंख्यया ॥ रक्तसिद्धार्थकान्हुत्वा सर्वान्साधयते रिपून् ॥२२॥
लवणं मधुसंयुक्तं हुत्वा सर्ववशी भवेत् ॥ हुत्वा तु करवीराणि रक्तानि ज्वालयेज्ज्वरम् ॥२३॥
हुत्वा भाल्लातकं तैलं देशादेव प्रचालयेत् ॥ हुत्वा तु निंबपत्राणि विद्वेषशांतये नृणाम् ॥२४॥
रक्तानां तंदुलानां च घृताक्तानां हुताशने । हुत्वा बलमवाप्नोति शत्रुभिर्न स जीयते ॥२५॥
प्रत्यानयनसिद्ध्यर्थं मधुसर्पिःसमन्वितम् ॥ गवां क्षीरं प्रदीप्तेऽग्नौ जुह्वतस्तत्प्रशाम्यति ॥२६॥
ब्रह्मचारी जिताहारो यः सहस्रत्रयं जपेत् ॥ संवत्सरेण लभत धनैश्वर्यं न संशयः ॥२७॥
शमीबिल्वपलाशानामर्कस्य तु विशेषतः ॥ पुष्पाणां समिधश्चैव हुत्वा हेममवाप्नुयात् ॥२८॥
आब्रह्मत्र्यंबकादीनां यस्यायतनमाश्रितः ॥ जपेल्लक्षं निराहारः स तस्य वरदो भवेत् ॥२९॥
बिल्वानां लक्षहोमेन घृताक्तानां हुताशने ॥ परां श्रियमवाप्नोति यदि न भ्रूणहा भवेत् ॥३०॥
पद्मानां लक्षहोमेन घृताक्तानां हुताशने ॥ प्राप्नोति राज्यमखिलं सुसंपन्नमकंटकम् ॥३१॥
पंचविंशतिलक्षेण दधिक्षीरं हुताशने ॥ स्वदेहे सिद्ध्यते जंतुः कौशिकस्य मतं तथा ॥३२॥
एकाहं पंचगव्याशी एकाहं मारुताशनः ॥ एकाहं च द्विजोऽन्नाशी गायत्रीजप उच्यते ॥३३॥
महारोगा विनश्यंति लक्षजप्यानुभावतः ॥ स्नात्वा शतेन गायत्र्याः शतमंतर्जले जपेत् ॥३४॥
शतेन यस्त्वपः पीत्वा सर्वपापैः प्रमुच्यते ॥ गोघ्नः पितृघ्नमातृघनु ब्रह्महा गुरुतल्पगः ॥३५॥
स्वर्णहारी तैलहारी यस्तु विप्रः सुरां पिबेत् ॥ चंदनद्वयसंयुक्तं कर्पूरं तंडुलं यवम् ॥३६॥
लवंगं सुफलं चाज्यं सिता चाम्रस्य दारुकैः ॥ अयं न्यूनविधिः प्रोक्तो गायत्र्याः प्रीतिकारकः ॥३७॥
एवंकृते महासौख्यं प्राप्नोति साधको ध्रुवम् अन्नाज्यभोजनं हुत्वा कृत्वा वा कर्मगर्हितम् ॥३८॥
न सीदेत्प्रतिगृह्णानो महीमपि ससागराम् ॥ येचास्य उत्थिता लोके गृहाः सूर्यादयो भुवि ॥ ते यांति सौम्यतां सर्वे शिवे इति न संशयः ॥३९॥
इति श्रीगायत्रीपटलं समाप्तम् ॥
॥ इति श्रीपरिशिष्ठप्रकरणं समाप्तम् ॥

# गायत्री मन्त्र नित्य जप विधि

आचार्यः

पूर्वोक्तरीत्यासर्वान्ब्राह्मणान्भूतशुद्ध्यादिमहान्यासान्कारयित्वा भगवत्याः श्रीगायत्रीदेव्याश्च पूजनमपि यजमानद्वारा निर्वर्त्य पूर्वं वा पङ्क्याकारेण कुशकम्बलाद्यन्यतमास्तृते काष्ठपट्टे जपार्थं वृत्तान्ब्राह्मणानुपवेश्य जपसङ्कल्पं भगवत्याः श्रीगायत्रीदेव्याः शापमोचनं चतुर्विंशतिमुद्राणां प्रदर्शनादिकञ्च कर्तुं सर्वान् ब्राह्मणान् मूलमंत्रेण आचमनं प्राणायामञ्च कारयेत् ॥ तद्यथा ॥ ॐ भूर्भुवः स्वः तत्स० ॐ आत्मतत्त्वं शोधयामि नमः स्वाहा ॥१॥

ॐ भूर्भुवः स्वः तत्स० ॐ विद्यातत्त्वं शोधयामि नमः स्वाहा ॥२॥

ॐ भूर्भुवः स्वः तत्स० ॐ शिवतत्त्वं शोधयामि नमः स्वाहा ॥३॥

इति त्रिराचमनं कारयित्वा सशिरस्कसप्तव्याहृतिसहितेन मूलमंत्रेण प्राणायामं कारयेत् । ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवि० ॐ आपो ज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोम् ॥ एवं यथाशक्ति नव त्रीन् वा प्राणायामं विधाय ब्राह्मणा हस्ते जलं गृहीत्वा जपसंख्यासङ्कल्पं कुर्युः । तद्यथा । देशकालौ सङ्कीर्त्य अस्मद्यजमानस्य मनःकामनापरिपूर्णार्थं स्वात्मनः श्रेयोऽर्थञ्च तेन प्रारब्धस्य श्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थं कृतसङ्कल्पमध्यात् पृथक् अमुकसहस्रसंख्याकं जपं करिष्यामहे । इति सङ्कल्पं विधाय गायत्रीशापविमोचनं कुर्यात् ॥ अस्य ( १ ) श्रीब्रह्मशापविमोचनमन्त्रस्य निग्रहानुग्रहकर्ता प्रजापतिरृषिः । भुक्तिमुक्तिप्रदा ब्रह्मशापविमोचनी गायत्रीशक्तिर्देवता । गायत्रीच्छन्दः । ब्रह्मशापविमोचनार्थे जपे विनियोगः ॥ ॐ गायत्रीं ब्रह्मेत्युपासीत यद्रूपं ब्रह्मविदो विदुः । तां पश्यन्ति धीराः सुमनसा वाचामग्रतः । ॐ वेदान्तनाथाय विद्महे हिरण्यगर्भाय धीमहि । तन्नो ब्रह्म प्रचोदयात् ॥ ॐ देवि गायत्रि त्वं ब्रह्मशापविमुक्ता भव ॥ पुनर्हस्ते जलं गृहीत्वा । अस्य ( २ ) श्रीविश्वामित्रशापविमोचनमन्त्रस्य निग्रहानुग्रहकर्ता विश्वामित्र ऋषिः । विश्वामित्रानुगृहीता गायत्रीशक्तिर्देवता । बाग्देहा गायत्रीच्छन्दः । विश्वामित्रशापविमोचनार्थे जपे विनियोगः ॥ ॐ गायत्रीं भजाम्यग्निमुखीं विश्वगर्भां यदुद्भवा देवाश्चक्रिरे विश्वसृष्टिम् । तां कल्याणीमिष्टकरीं प्रपद्ये यन्मुखान्निःसृतोऽखिलवेदगर्भः । ॐ देवि गायत्रि त्वं विश्वामित्रशापविमुक्ता भव ॥ अस्य ( ३ ) श्रीवसिष्ठपविमोचनमन्त्रस्य निग्रहानुग्रहकर्ता श्रीवसिष्ठऋषिः । शक्तिर्देवता । गायत्रीछन्दः । श्रीवसिष्ठशापविमोचनार्थे जपे विनियोगः । सोऽहमर्कमयं ज्योतिरात्मज्योतिरहं शिवः । आत्मज्योतिरहं शुक्रः सर्वज्योतीरसोऽस्म्यहम् ॥ योनिमुद्रां प्रदर्श्य गायत्रीमन्त्रं पठित्वा । ॐ देवि गायत्रि त्वं वसिष्ठशापविमुक्ता भव ॥ एवं शापविमोचनं कृत्वा चतुर्विंशतिमुद्राः प्रदर्शयेत् ( प्रृ. २२८-९ ) ॥ सुमुखं सम्पुटं चैव विततं विस्तृतं तथा । द्विमुखं त्रिमुखं चैव चतुःपञ्चमुखं तथा ॥१॥

षण्मुखाधोमुखं चैव व्यापकञ्जलिकं तथा । शकटं यमपाशञ्च ग्रथितं चोन्मुखोन्मुखम् ॥२॥

प्रलम्बं मुष्टिकञ्चैव मत्स्यः कूर्मो वराहकम् । सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ॥३॥

एताश्चतुर्विंशतिमुद्राः प्रदर्श्य रुद्राक्षमालां मूलमन्त्रेण संप्रोक्ष्य । ॐ मां माले महामाये सर्वशक्तिस्वरूपिणि ॥ चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव । इति सम्प्रार्थ्य । " ॐ ह्रीं सिद्ध्यै नमः " इति मालां सम्पूज्य भगवत्याः श्रीगायत्रीदेव्या ध्यानं कुर्यात् ॥ ॐ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम् । गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥१॥

अथ प्रातर्मध्याह्नसायंकालिकादिध्यानम् ॥ ब्रह्माणी

चतुराननाऽक्षवलया कुम्भस्तनी स्रुक्स्रुवौ बिभ्राणाऽरुणकान्तिरिन्दुवदना ऋग्रुपिणी बालिका । हंसारोहणकेलिरम्बरमणोर्बिम्बाश्रिता भूतिदा गायत्री हृदि भाविता भवतु नः सम्पत्समृद्ध्यै सदा ॥१॥ रुद्राणी नवयौवना त्रिनयना वैयाघ्रचर्माम्बरा खट्वाङ्गत्रिशिखाक्षसूत्रवलया ध्येया यजूरूपिणी ॥ विद्युद्दामजटाकलापविलसब्दालेन्दुमौलिर्मुदासावित्री वृषवाहना शिततनूर्भूत्यै श्रियै चास्तु नः ॥२॥ ध्येया सा च सरस्वती भगवती पीताम्बरालङ्कृता श्यामातन्विजयादिभिः परिलसद्गात्राञ्चिता वैष्णवी ॥ ताक्ष्र्यस्था मणिनूपुरङ्गदशतग्रैवेयभूषोज्ज्वला हस्तालम्बितशङ्खचक्रसुगदा भूत्यै श्रियै चास्तु नः ॥३॥ इति ध्वात्वा मानसोपचारैः पूजयेत् ॥ तद्यथा । " भगवत्यै श्रीगायत्रीदेव्यै नमः । " लं पृथिव्यात्मकं गन्धं परि० । हं आकाशात्मकं पुष्पं परि० । यं वाय्वात्मकं धूपं परि० । रं वह्न्यात्मकं दीपं परि० । वं अमृतात्मकं नैवेद्यं परि० । सं सोमात्मकं ताम्बूलं परि० । छत्रचामरमुकुरमुकुटपादुकाः परि० ॥ एवं मानसोपचारैः संपूज्य । ततः सर्वे ब्राह्मणा मूलमंत्रस्यार्थं यजमानस्य कल्याणञ्च चिन्तयन्तः श्रीगायत्रीजपं कुर्युः ॥ ततो जपान्ते मालाः शिरसि निधाय भगवत्याः श्रीगायत्रीदेव्या मूलमन्त्रस्य न्यासान् कर्युः । तद्यथा ॥ हस्ते जलं गृहीत्वा । ॐ तत्सवितुरित्यस्या गायत्र्या विश्वामित्र ऋषिः । सविता देवता । गायत्रीच्छन्दः । अग्निर्मुखम् । ब्रह्मा शिरः । विष्णुर्हृदयम् । रुद्रो ललाटम् । पृथ्वि योनिः । त्रैलोक्यं चरणौ । वरेणीति बीजम् । यम् इति शक्तिः । यात् इति कीलकम् । सकलपापक्षयार्थे न्यासे विनियोगः । श्रीविश्वामित्रर्षये नमः शिरसि । गायत्रीच्छन्दसे नमः मुखे । सवित्रुदेवतायै नमः हृदये ॥ विनियोगाय नमः सर्वाङ्गे ॥ अथ करादिन्यासाः । ॐ तत्सवितुर्ब्रह्मात्मने अङ्गुष्ठाभ्यां नमः । ॐ वरेणियं विष्णवात्मने तर्जनीभ्यां नमः । ॐ भर्गो देवस्य रुद्रात्मने मध्यमाभ्यां नमः । ॐ धीमहि ईश्वरात्मनेऽनामिकाभ्यां नमः । ॐ धियो यो नः सदाशिवात्मने कनिष्ठिकाभ्यां नमः । प्रचोदयात्सत्यात्मने करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि ॥ ॐ तत्सवितुर्ब्रह्मात्मने हृदयाय नमः । ॐ वरेणीयं विष्णवात्मने शिरसे स्वाहा । ॐ भर्गो देवस्य रुद्रात्मने शिखायै वषट् । ॐ धीमहि ईश्वरात्मने कवचाय हुम् । ॐ धियो यो नः सदाशिवत्मने नेत्रत्रयाय वौषट् । ॐ प्रचोदयात् सत्यात्मने अस्त्राय फट् ॥ ततः सव्याहृतिगायत्रीन्यासान् कुर्यात् । ॐ भूः अङ्गुष्ठाभ्यां नमः । ॐ भुवः तर्जनीभ्यां नमः । ॐ स्वः मध्यमाभ्यां नमः । ॐ तत्सवितुर्वरेण्यम् अनामिकाभ्यां नमः । ॐ भर्गो देवस्य धीमहि कनिष्ठिकाभ्यां नमः । ॐ धियो यो नः प्रचोदयात् करतलकरपृष्ठाभ्यां नमः । ततो हृदयादि ॥ ॐ भूः हृदयाय नमः । ॐ भुवः शिरसे स्वाहा । ॐ स्वः शिखायै वषट् । ॐ तत्सवितुर्वरेण्यं कवचाय हुम् । ॐ भर्गो देवस्य धीमहि नेत्रत्रयाय वौषट् । ॐ धियो यो नः प्रचोदयात् अस्त्राय फट् । ततः करसम्पुटौ कृत्वा प्रार्थयेत् ॥ ॐ मुक्ताविद्गुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम् । गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ एवं सम्प्रार्थ्य अष्टौ मुद्राः ( पृ. २३० ) प्रदर्शयेत् । सुरभिर्ज्ञानवैराग्ये योनिः कूर्मोऽथ पङ्कजम् । लिङ्गं निर्वाणकं चैव जपान्तेऽष्टौ प्रदर्शयेत् ॥१॥ इत्यष्टौ मुद्राः प्रदर्श्य । सर्वे ब्राह्मणाः हस्ते जलं गृहीत्वा । अस्माभिः यथाशक्ति सङ्कल्पानुसारं कृतेन जपकर्मणा भगवती श्रीगायत्रीदेवी प्रीयतां न मम । इत्युक्त्वा तज्जलं " गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥ " इति देव्यै निवेद्य प्रार्थयेत् ॥ हीनो विभक्तिवर्णैश्च व्यञ्जनैश्च स्वरैरपि । जपो मे क्षम्यतां देवि प्रसादं कुरु किङ्करे ॥ इति प्रार्थयेयुः ॥

॥ इति श्रीगायत्रीमन्त्रनित्यजपविधिः ॥

# अथ श्रीगायत्रीस्तवराजः

ॐ अस्य श्रीगायत्रीस्तवराजस्तोत्रमंत्रस्य नूतनसृष्टिकर्ता विस्वामित्र ऋषिः गायत्री छन्दः नाना छंदांसि सकलजननी चतुष्पदा गायत्री परमात्मा देवता सर्वोत्कृष्टपरं धाम प्रथमपादो बीजं द्रितीयः शक्तिः तृतीयः कीलकं दशप्रणवसंयुक्ता सव्याहृतिका तूर्यपादसहिता व्यापकं मम धर्मार्थकाममोक्षार्थे जपे विनियोगः ॥ न्यासं कृत्वा ध्यायेत् ॥ तद्यथा ॥ गायत्रीं वेदधात्रीं शतमखफलदां वेदशास्त्रैकवेद्यां चिच्छक्तिं ब्रह्मविद्यां परमशिवपदां श्रीपदं वै करोति ॥ सर्वोत्कृष्टं पदं तत्सवितुरनुपदांते वरेण्यं शरण्यं भर्गो देवस्य धीमह्यभिदधति धियो यो न ( प्रचोदयात् ) इत्यौर्वतेजः ॥१॥ साम्राज्यबीजं प्रणवत्रिपादं सव्यापसव्यं प्रजपेत्सहस्रम् ॥ संपूर्णकामं प्रणवं विभूतिं तथा भवेद्वाक्यविचित्रवाणी ॥२॥ शुभं शिवं शोभनमस्तु मह्यं सौभाग्यभोगोत्सवमस्तु नित्यम् ॥ प्रकाशविद्यात्रयशास्त्रसर्वं भजेन्महामन्त्रफलं प्रिये वै ॥३॥ ब्रह्मास्त्रं ब्रह्मदंडं शिरसि शिखिमहद्ब्रह्मशीर्षं नमोंतं सूक्तं पारायणोक्तं प्रणवमथ महावाक्यसिद्धांतमूलम् ॥ तुर्य्यं त्रीणि द्वितीयं प्रथममनुमहावेदवेदांतसूक्तं नित्यं स्मृत्यानुसारं नियमितचरितं मूलमंत्रं नमोन्तम् ॥४॥ अस्त्रं शस्त्रहतं त्वघोरसहितं दंडेन वाजीहतं चादित्यादिहतं शिरोंतसहितं पापक्षयार्थं परम् ॥ तुर्य्यांत्यादिविलोममंत्रपठनं बीजं शिखांतोर्ध्वकं नित्यं कालनियम्यविप्रविदुषां किं दुष्कृतं भूसुरान् ॥५॥ नित्यं मुक्तिप्रदं नियम्य पवनं निर्घोषशक्तित्रयं सम्यग्ज्ञानगुरूपदेशविधिवद्देवीं शिखान्तामपि ॥ अष्टैकोत्तरसंख्ययानुगतसौषुम्नादिमार्गत्रयीं ध्यायेन्नित्यसमस्तवेदजननीं देवीं त्रिसंध्यामयीम् ॥६॥ गायत्रीं सकलागमार्थफलदां सौरस्य बीजेश्वरीं सर्वान्मायसमस्तमंत्रजननीं सर्वज्ञधामेश्वरीम् ॥ ब्रह्मादित्रयसंपुटार्थकरणीं संसारपारायणीं संध्यां सर्वसमानतंत्रपरया ब्रह्मानुसंधायिनीम् ॥७॥ एकद्वित्रिचतुःसमानगणनावर्णाष्टकं पादयोः पादादौ प्रणवादिमंत्रपठने मंत्रत्रयीसंपुटाम् ॥ संध्यायां द्विपदं पठेत्परतरं सायं तुरीयायुतं नित्यानित्यमनंतकोटिफलदं प्राप्तुं नमस्कुर्महे ॥८॥ ओजोऽसीति सहोऽस्यथो बलमसि भ्राजोऽसि तेजस्विनी वर्जस्वी सविताग्निसोमममृतं रूपं परं धीमहि ॥ देवानां द्विजवर्यतां मुनिगणे मुक्त्यर्थितां शांतितामोमित्येकमृचं पठंति यमिनो यं यं स्मरेत्प्राप्नुयात् ॥९॥ ओमित्येकमजस्वरूपममलं तत्सप्तधा भाजितं तारं तंत्रसमन्वितं परतरे पादत्रयं गर्भितम् ॥ आपोज्योतिरसोमृतं जनमहः सत्यं तपः स्वर्भुवर्भूयोभूय नमामि भूर्भुवः स्वरोमेतैर्महामंत्रकम् ॥१०॥ आदौ बिंदुमनुस्मरन्परतरे बालात्रिवर्णोच्चरन्व्याहृत्यादिसबिंदुयुक्तत्रिपदातारत्रयं तुर्यकम् ॥ आरोहादवरोहतः क्रमगता श्रीकुंडलीत्थं स्थिता देवी मानसपंकजे त्रिनयना पंचानना पातु माम् ॥११॥ सर्वे सर्ववशे समस्तसमये सत्यात्मिके सात्त्विके सावित्रीसवितात्मके शशियुते सांख्यायनीगोत्रजे ॥ संध्यात्रीण्युपकल्प्य संग्रहविधौ संध्याभिधानात्मके गायत्रीं प्रणवादिमंत्रगुरुणा संप्राप्य तस्मै नमः ॥१२॥ क्षेमं दिव्यमनोरथं परतरे चेतः समाधीयतां ज्ञानं नित्यवरेण्यमे तदमलं देवस्य भर्गो धियः ॥ मोक्षश्रीर्विजयार्थिनोऽथ सवितुर्यच्छ्रेष्ठधीस्तत्पदं प्रज्ञामेधप्रचोदयात्प्रतिदिनं यो नः पदं पातु माम् ॥१३॥ सत्यं तत्सवितुर्वरेण्यविरलं विश्वादिमायात्मकं सर्वाद्यं प्रतिपादपादरमया तारं तथा मन्प्रथम् ॥ तुर्यान्तं त्रितयं द्वितीयमपरं संयोगसव्याहृतिं सर्वाम्नायमनोन्मयीं मनसिजां ध्यायामि देवीं पराम् ॥१४॥ आदौ गायत्रिमंत्रे गुरुकृतनियमं धर्मकर्मानुकूलं सर्वाद्यं सारभूतं सकलमनुमयं देवतानामगम्यम् ॥ देवानां पूर्वदेवं द्विजकुलमुनिभिः सिद्धविद्याधराद्यैः को वा वक्तुं समर्थस्तवमनुमहिमाबीजराजादिमृलम् ॥१५॥ गायत्रीं त्रिपदां त्रिबीजसहितां त्रिव्याहृतिं त्रैपदां त्रिब्रह्मां त्रिगुणां त्रिकालनियमां वेदत्रयीं तां पराम् ॥ सांख्यादित्रयरूपिणीं त्रिनयनां मात्रात्रयीं तत्परां त्रैलोक्यत्रिदशत्रिकोटिसहितां संध्यां त्रयीं तां नुमः ॥१६॥ ओमित्येतत्त्रिमात्रां त्रिभुवनकरणं त्रिस्वरं वह्निरूपं त्रीणि त्रीणि त्रिपादं त्रिगुण गुणमयं त्रैपुरांत त्रिसूक्तम् ॥

तत्त्वानां पूर्वशक्तिं त्रितयगुरुपदं पीठयंत्रात्मकं तं तस्मादेतत् त्रिपादं त्रिपदमनुसरं त्राहि मां भो नमस्ते ॥१७॥ स्वस्तिश्रद्धातिमेधा मधुमतिमधुरः संशयः प्रज्ञकांतिर्विद्या बुद्धिर्बलं श्रीरतनुधनपतिः सौम्यवाक्यानुवृत्तिः ॥ मेधा प्रज्ञा प्रतिष्ठा मृदुमधुरगिरा पूर्णविद्याप्रपूर्णं प्राप्तं प्रत्यूषचिंत्यं प्रणवपरवशात्प्राणिनां नित्यकर्म ॥१८॥ पंचाशद्वर्णमध्ये प्रनवपरयुते मंत्रमाद्यं नमोंतं सर्वं सव्यापसव्यं शतगुणमभितो वर्गमष्टोत्तरं ते ॥ एवं नित्यं प्रजप्तं त्रिभुवनसहितं तूर्य्ययुक्तं त्रिपादं ज्ञानं विज्ञानगम्यं गगनसुसदृशं ध्यायते यः स मुक्तः ॥१९॥ आदिक्षांतसबिंदुयुक्तसहितं मेरुं क्षकारात्मकं व्यस्ताव्यस्तसमस्तवर्गसहितं पूर्णं शताष्टोत्तरम् ॥ गायत्रीं जपतां त्रिकालसहितां नित्यं सनौमित्तिकं चैवं जाप्यफलं शिवेन कथितं सद्भोग्यमोक्षप्रदम् ॥२०॥ सप्तव्याहृतिसप्ततारविकृतिः सत्यं वरेण्यं धृतिः सर्वं तत्सवितुश्च धीमहि महादेवस्य भर्गं भजे ॥ धाम्नोधाम च भादिधारणमहाधीमत्पदं ध्यायते ॐ तत्सर्वमनुप्रपूर्णदशकं पादत्रयं केवलम् ॥२१॥ विज्ञाने विलसद्विवेकवचसः प्रज्ञानुसंधारिणीं श्रद्धामेध्ययशःशिरःसुमनसःस्वस्तिश्रियं त्वां सदा ॥ आयुष्यं धनधान्यलक्ष्मीमतुलां देवीं कटाक्षं परं तत्काले सकलार्थसाधनमदान्मुक्तिं महत्त्वं पदम् ॥२२॥

पृथ्वीगंधोऽर्च्चनायां नभसि कुसुमता वायुधूपप्रकर्षो वह्निर्दीपप्रकाशो जलममृतमयं नित्यसंकल्पपूजा ॥ एतत्सर्वं निवेद्यं सुखवति हृदये सर्वदा दंपतीनां त्वं सर्वज्ञे शिवं मे कुरु तव ममता भक्तवृन्दे प्रसिद्धा ॥२३॥ सौम्यं सौभाग्यहेतुं सकलसुखकरं सर्वसौख्यं समस्तं सत्यं सद्भोगनित्यं सुखजनसुहृदं सुदरं श्रीसमस्तम् ॥ सौमंगल्यं समग्रं सकलशुभकरं स्वस्तिवाचं समस्तं संवेद्यं सद्विवेकं त्रिपदपदयुगं प्राप्तुमाद्यं समस्तम् ॥२४॥ गायत्रीपदपंचपंचप्रणवद्वंद्वं त्रिधा संपुटं सृष्ट्यादिक्रममंत्रजाप्यदशकं देवीपदं भूत्रयम् ॥ मंत्रादिस्थितिकेषु संपुटमिदं श्रीमातृकावेष्टनं वर्ष्णंत्यादिविलोममंत्रजपनं संहारसंमोहनम् ॥२५॥ भूराद्यं भूर्भुवः स्वस्त्रिपदपदयुतं त्र्यक्षमाद्यंतयोज्यं सृष्टिस्थित्यंतकार्य्यं क्रमशिखिसकलं सर्वमंत्रं प्रशस्तम् ॥ सर्वांगं मातृकाणां मनुमयवपुषं मंत्रयोगं प्रयुक्तं संहारं क्षादिवर्णं वसुशतगणनं मंत्रराजं नमामि ॥२६॥ विश्वामित्रकृतं परं हितकरं सर्वार्थसिद्धिप्रदं स्तोत्राणां परमं प्रभातसमये पारायणं नित्यशः ॥ वेदानां विधिवादमंत्रसफलं सिद्धिप्रदं संपदां स प्राप्नोत्यपरत्र सर्वसुखदं चायुष्यमारोग्यताम् ॥२७॥ ॥ इति विश्वामित्रकृतश्रीगायत्रीस्तवराजः संपूर्णः ॥

# अथ श्रीगायत्रीतत्त्वम्

श्रीगणेशाय नमः ॥ श्रीगायत्र्यै नमः ॥ श्रीगायत्रीतत्त्वमालामंत्रस्य विश्वामित्र ऋषिः ॥ अनुष्टुप् छन्दः ॥ परमात्मा देवता । हलो बीजानि । स्वराः शक्तयः ॥ अव्यक्तं कीलकम् ॥ मम समस्तपापक्षयार्थे गायत्रीतत्त्वपाठे विनियोगः ॥ चतुर्विंशति तत्त्वानां यदेकं तत्त्वमुत्तमम् ॥ अनुपाधि परं ब्रह्म तत्परं ज्योतिरोमिति ॥१॥ यो वेदादौ स्वरः प्रोक्तो वेदांते च प्रतिष्ठितः ॥ तस्य प्रकृतिलीनस्य तत्परं ज्योतिरोमिति ॥२॥ तत्सदादिपदैर्वाच्यं परमं पदमव्ययम् । अभेदत्वं पदार्थस्य तत्परं ज्योतिरोमिति ॥३॥ यस्य मायांशभानेन जगदुत्पद्यतेऽखिलम् । तस्य सर्वोत्तमं रूपमरूपस्याभिधीमहि ॥४॥ यं न पश्यन्ति परमं पश्यंतोऽपि दिवौकसः ॥ तं भूतानिलदेवं तु सुपर्णमुपधावताम् ॥५॥ यदंशः प्रेरितो जंतुः कर्मपाशनियंत्रितः ॥ आजन्मकृतपापानामपहंतुं समर्थकः ॥६॥ इदं महामुनिप्रोक्तं गायत्रीतत्त्वमुत्तमम् ॥ यः पठेत्परया भक्त्या स याति परमां गतिम् ॥७॥ सर्ववेदपुराणेषु सांगोपांगेषु यत्फलम् ॥ सकृदस्य जपादेव तत्फलं प्राप्नुयान्नरः ॥८॥ अभक्ष्यभक्षणात्पूतो भवति ॥ अगम्यागमनात्पूतो भवति ॥ सर्वपापेभ्यः पूतो भवति ॥ प्रारधीयानो रात्रिकृतं पापं नाशयति ॥ सायमधीयानो दिवसकृतं पापं नाशयति ॥ मध्यंदिनमुपयुंजानोऽसत्प्रतिग्रहादिना मुक्तो भवति ॥ अनुप्लवं पुरुषा पुरुषमभिवदंति यं यं काममभिद्य्हयायति तं तमेवाप्नोति पुत्रपौत्रान्कीर्तिसौभाग्यांश्चोपलभवते ॥ सर्वभूतात्ममित्रो देहांते तिद्विशिष्टो गायत्रीपरमं पदमवाप्नोति ॥ इति श्रीवेदसारे श्रीगायत्रीतत्त्वं संपूर्णम् ॥

# गायत्री कवचम्

श्रीगणेशाय नमः।

**याज्ञवल्क्य उवाच!**

स्वामिन् सर्वजगन्नाथ संशयोऽस्ति महान्मम।
चतुःषष्ठिकलानां च पातकानां च तद्वद॥
मुच्यते केन पुण्येन ब्रह्मरूपं कथं भवेत्।
देहश्च देवतारूपो मन्त्ररूपो विशेषतः॥

**ब्रह्मोवाच!**

क्रमतः श्रोतुमिच्छामि कवचं विधिपूर्वकम्।
ॐ अस्य श्रीगायत्रीकवचस्य ब्रह्मविष्णुरुद्रा ऋषयः।
ऋग्यजुःसामाऽथर्वाणि छन्दांसि।
परब्रह्मस्वरूपिणी गायत्री देवता।
भूः बीजम्। भुवः शक्तिः। स्वः कीलकम्।
श्रीगायत्रीप्रीत्यर्थे जपे विनियोगः।
ॐ भूर्भुवः स्वः तत्सवितुरिति हृदयाय नमः।
ॐ भूर्भुवः स्वः वरेण्यमिति शिरसे स्वाहा।
ॐ भूर्भुवः स्वः भर्गो देवस्येति शिखायै वषट्।
ॐ भूर्भुवः स्वः धीमहीति कवचाय हुम्।
ॐ भूर्भुवः स्वः धियो यो नः इति नेत्रत्रयाय वौषट्।
ॐ भूर्भुवः स्वः प्रचोदयादिति अस्त्राय फट्।

**अथ ध्यानम्।**

मुक्ताविद्रुमहेमनील धवलच्छायैर्मुखैस्त्रीक्षणै
र्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम्।
गायत्रीं वरदाभयाङ्कुशकशां शुभ्रं कपालं गुणं
शंख, चक्रमथारविन्दुयुगलं हस्तैर्वहन्तीं भजे॥
ॐ गायत्री पूर्वतः पातु सावित्री पातु दक्षिणे।
ब्रह्मविद्या तु मे पश्चादुत्तरे मां सरस्वती ॥१॥
पावकीं च दिशं रक्षेत्पावकोज्ज्वलशालिनी।
यातुधानीं दिशं रक्षेद्यातुधानगणार्दिनी ॥२॥
पावमानीं दिशं रक्षेत्पवमानविलासिनी।
दिशं रौद्रीमवतु मे रुद्राणी रुद्ररूपिणी ॥३॥
ऊर्ध्वं ब्रह्माणी मे रक्षेदधस्ताद्वैष्णवी तथा।
एवं दश दिशो रक्षेत्सर्वतो भुवनेश्वरी ॥४॥
तत्पदम् पातु मे पादौ जंघे मे सवितुः पदम्।
वरेण्यम् कटिदेशं तु नाभिं भर्गस्तथैव च ॥५॥
देवस्य मे तु हृदयं धीमहीति गलं तथा।
धियो मे पातु जिह्वायां यः पदं पातु लोचने ॥६॥
ललाटे नः पदं पातु मूर्द्धानं मे प्रचोदयात्।
तद्वर्णः पातु मूर्द्धानं सकारः पातु भालकम् ॥७॥
चक्षुषी मे विकारस्तु श्रोत्रं रक्षेत्तु कारकः।
नासापुटे वकारो मे रेकारस्तु कपोलयोः ॥८॥
णिकारस्त्वधरोष्ठे च यंकारस्त्वधरोष्ठके।
आस्यमध्ये भकारस्तु र्गोकारश्चिबुके तथा ॥९॥
देकारः कण्ठदेशे च वकारः स्कन्धदेशयोः।
स्यकारो दक्षिणं हस्तं धीकारो वामहस्तके ॥१०॥
मकारो हृदयं रक्षेद्धिकारो जठरं तथा।
धिकारो नाभिदेशं तु योकारस्तु कटिद्वयम् ॥११॥
गुह्यम् रक्षतु योकार ऊरु मे नः पदाक्षरम् ।
प्रकारो जानुनी रक्षेच्चोकारो जंघदेशयोः ॥१२॥
दकारो गुल्फदेशं तु यात्कारः पादयुग्मकम्।
जातवेदेति गायत्री त्र्यम्बकेति दशाक्षरा ॥१३॥
सर्वतः सर्वदा पातु आपोज्योतीति षोडशी।
इदम् तु कवचं दिव्यं बाधाशतविनाशकम् ॥१४॥
चतुःषष्ठिकलाविद्यासकलैश्वर्यसिद्धिदम्।
जपारम्भे च हृदयं जपान्ते कवचं पठेत् ॥१५॥
स्त्रीगोब्राह्मणमित्रादिद्रोहाद्यखिलपातकैः।
मुच्यते सर्वपापेभ्यः परं ब्रह्माधिगच्छति ॥१६॥
॥ इति श्रीमद्वसिष्ठसंहितायां गायत्रीकवचं सम्पूर्णम् ॥

# गायत्री सुप्रभातम्

श्री पातूरि सीतारामांजनेयुलु कृत

॥श्रीरस्तु ॥ श्री

जानिरद्रितनयापतिरब्जगर्भः
सर्वे च दैवतगणाः समहर्षयोऽमी।
ऐते भूतनिचयाः समुदीरयन्ति
गायत्रि लोकविनुते तव सुप्रभातम् ॥१॥
पुष्पोच्चय प्रविलसत्कर कंजयुग्माम्
गंगादिदिव्य तटिनीवरतीरदेशे।
ष्वर्घ्यम् समर्पयितुमत्रजनास्तवैते
गायत्रि लोकविनुते तव सुप्रभातम् ॥२॥
कर्णेमृतम् विकिरता स्वरसंचयेन
सर्वे द्विजाः श्रुतिगणम् समुदीरयन्ति।
पश्याश्रमासथ वृक्षतलेषु देवि
गायति लोकविनुते तव सुप्रभातम् ॥४॥
गावो महर्षिनिचयाश्रम भूमिभागात्
गन्तुम् वनाय शनकैः शनकैः प्रयान्ति।
वत्सान् पयोऽमृतरसम् ननु पाययित्या
गायत्रि लोकविनुते तव सुप्रभातम् ॥४॥
शिष्य प्रबोधनपरा वर मौनि मुख्याः
व्याख्यान्ति वेदगदितम् स्फुट धर्म
ततत्त्वम्। स्वीयाश्रमाङ्गणतलेषु मनोहरेषु
गायत्रि लोकविनुते तव सुप्रभातम् ॥५॥
श्रोत्रामृतम् श्रुतिरवम् कलयन्त एते
विस्मृत्य गन्तुमटवीम् फललाभलोभात्।
वृक्षाग्र भूमिषु वनेषु लसन्ति कीराः
गायत्रि लोकविनुते तव सुप्रभातम् ॥६॥
मूर्ति त्रयात्मकलिते निगम त्रयेण
वेद्ये स्वरत्रय परिस्फुट मन्तरूपे।
तत्त्वप्रबोधनपरोपनिषत्प्रपञ्चे
गायत्रि लोकविनुते तव सुप्रभातम् ॥७॥
विश्वात्मिके निगमशीर्षवतंसरूपे
सर्वागमान्तरुदिते वरतैजसात्मन्।
प्राज्ञात्मिके सृजनपोषणसंहृतिस्थे
गायत्रि लोकविनुते तव सुप्रभातम् ॥८॥
तुर्यात्मिके सकलतत्त्वगणानतीते
आनंदभोगकलिते परमार्धदत्रि
ब्रह्मानुभूतिवरदे सततम् जनानाम्।
गायत्रि लोकविनुते सुप्रभातम् ॥९॥
तारस्वरेण मधुरम् परिगीयमाने
मन्द्रस्वरेण मधुरेण च मध्यमेन।
गानात्मिके निखिललोक मनोज्ञ भावे
गायत्रि लोकविनुते तव सुपभातम् ॥१०॥
पापाटवी दहन जागृत मानसा त्वम्
भक्तौघ पालन निरंतर दीक्षिताऽसि।
त्वय्येव विश्वमखिलम् स्थिरतामुपैति
गायत्रि लोकविनुते तव सुप्रभातम् ॥११॥
या वैदिकी निखिल पावन पावनी वाक्
या लौकिकी व्यवहृति प्रवणा जनानाम्।
या काव्यरूप कलिता तव रूप मेताः
गायत्रि लोकविनुते तव सुप्रभातम् ॥१२॥
दिव्यम् विमानमधिरुह्य नभोङ्गणेऽत्र
गायन्ति दिव्य महिमानमिमे भवत्याः।
पश्य प्रसीद निचया दिविजाङ्गनानाम्
गायत्रि लोकविनुते तव सुप्रभातम् ॥१३॥
हैमीम् रुचम् सकल भूमिरुहाग्रदेशे
ष्वाधाय तत्कृत परोपकृतौ प्रसन्नः।
भानुः करोत्यवसरे कनकाभिषेकम्
गायत्रि लोकविनुते तव सुप्रभातम् ॥१४॥
दिव्यापगासु सरसीषु वनी निकुङ्जे
षूच्चावचानि कुसुमानि मनोहराणि।
पुल्लानि सन्ति परितस्तव पूजनाय
गायत्रि लोकविनुते तव सुप्रभातम् ॥१५॥
कुर्वन्ति पक्षिनिचयाः कलगानमेते
वृक्षाग्रमुन्नत् तरासनमाश्रयन्तः।
देवि त्वदीय महिमानमुदीरयन्तो
गायत्रि लोकविनुते तव सुप्रभातम् ॥१६॥
विश्वेशि विष्णुभगिनि श्रुतिवाक्स्वरूपे
तन्मात्रिके निखिलमन्तमयस्वरूपे।
गानात्मिके निखिलतत्त्वनिजस्वरूपे
गायत्रि लोकविनुते तव सुप्रभातम् ॥१७॥
तेजोमयि त्रिभुवनावनसक्तचित्ते
सन्धात्मिके सकल काल कला स्वरूपे।
मृत्युंजये जयिनि नित्यनिरंतरात्मन्
गायत्रि लोकविनुते तव सुप्रभातम् ॥१८॥
त्वामेव देवि परितो निखिलानि तन्त्रा
ण्याभाति तत्त्वमखिलम् भवतीम् विवृण्वत्।
त्वम् सर्वदाऽसि तरुणारुणदिव्यदेहे
गायत्रि लोकविनुते तव सुप्रभातम् ॥१९॥
नित्याऽसि देवि भवती निखिले प्रपञ्चे
वन्द्याऽसि सर्व भुवनैः सततोद्यतासि।
धी प्रेरिकाऽसि भुवनस्य चराचरस्य
गायत्रि लोकविनुते तव सुप्रभातम् ॥२०॥
वन्दामहे भगवतीम् भवतीम् भवाब्धि
सन्तारिणीम् त्रिकरणैः करुणामृताब्दे।
सम्पश्य चिन्मयतनो करुणार्द्रदृष्ट्या
गायत्रि लोकविनुते तव सुप्रभातम् ॥२१॥
त्वम् मातृकामयतनुः परम प्रभावा
त्वय्येव देवि परमः पुरुषः पुराणः।
त्वत्तः समस्त भुवनानि समुल्लसन्ति
गायत्रि लोकविनुते तव सुप्रभातम् ॥२२॥
त्वम् वै प्रसूर्निखिलदेवगणस्य देवि
त्वम् स्तूयसे त्रिषवणम् निखिलैश्च लोकैः।
त्वम् देश काल परमार्थ परिस्फुटासि
गायत्रि लोकविनुते तव सुप्रभातम् ॥२३॥
त्वम् गाधिसूनु परमर्षि वरेण दृष्टा
तेजोमयी सवितुरात्ममयाखिलार्था।
सर्वार्थदा प्रणत भक्त जनस्य शश्वत्
गायत्रि लोकविनुतो तव सुप्रभातम् ॥२४॥
संकल्प्य लोकमखिलम् मनसैव सूषे
कारुण्यभाव कलिताऽवसि लोकमाता।
कोपान्विता तमखिलम् कुरुषे प्रलीनम्
गायत्रि लोकविनुते तव सुप्रभातम् ॥२५॥
मुक्ताभ विद्रुम सुवर्ण महेन्द्र नील
श्वेतप्रभैर् भुवन रक्षण बुद्धि दीक्षैः।
वक्त्रैर्युते निगम मातरुदारसत्त्वे
गायत्रि लोकविनुते तव सुप्रभातम् ॥२६॥
कारुण्य वीचि निचयामल कान्ति कान्ताम्
ब्रह्मादि सर्व दिविजेड्य महाप्रभावाम्।
प्रीत्या प्रसारय दृशम् मयि लोकमातः
गायत्रि लोकविनुते तव सुप्रभातम् ॥२७॥
श्री लक्ष्मणादि गुरु सत्करुणैकलब्ध
विद्या विनीत मतियानय माङनेयः।
संसेवतेऽत्रभवतीम् भुवतीम् वचोभिः
गायत्रि लोकविनुते तव सुप्रभातम् ॥२८॥

॥ इति सीतारामाङ्जनेय कवि कृत गायत्री सुप्रभातम्॥

# गायत्रीरहस्योपनिषत्

॥ गायत्रीरहस्योपनिषत् ॥

ॐ स्वस्ति सिद्धम् । ॐ नमो ब्रह्मणे ।

ॐ नमस्कृत्य याज्ञवल्क्य ऋषिः स्वयंभुवं परिपृच्छ्हति।

हे ब्रह्मन् गायत्र्या उत्पत्तिः श्रोतुमिच्छ्हामि ।

अथातो वसिष्ठः स्वयंभुवं परिपृच्छ्हति ।

यो ब्रह्मा स ब्रह्मोवाच ।

ब्रह्मज्ञानोत्पत्तेः प्रकृतिं व्याख्यास्यामः ।

को नाम स्वयंभू पुरुष इति ।

तेनाङ्गुलीमथ्यमानात् सलिलमभवत् ।

सलिलात् फेनमभवत् । फेनाद्बुद्बुदमभवत् ।

बुद्बुदादण्डमभवत् । अण्डाद्ब्रह्माभवत् ।

ब्रह्मणो वायुरभवत् । वायोरग्निरभवत् ।

अग्नेरोङ्कारोऽभवत् । ओङ्काराद्व्याहरृतिरभवत् ।

व्याहरृत्या गायत्र्यभवत् ।गायत्र्या सावित्र्यभवत् ।

सावित्र्या सरस्वत्यभवत्। सरस्वत्या सर्वे वेदा अभवन् ।

सर्वेभ्यो वेदेभ्यः सर्वे लोका अभवन् ।

सर्वेभ्यो लोकेभ्यः सर्वे प्राणिनोऽभवन् ।

**अथातो गायत्री व्याहृतयश्च प्रवर्तन्ते ।**

का च गायत्री काश्च व्याहृतयः ।किं भूः किं भुवः किं सुवः किं महः किं जनः किं तपः किं सत्यं किं तत् किं सवितुः किं वरेण्यं किं भर्गः किं देवस्य किं धीमहि किं धियः किं यः किं नः किं प्रचोदयात् ।ॐ भूरिति भुवो लोकः । भुव इत्यन्तरिक्षलोकः । स्वरिति स्वर्गलोकः । मह इति महर्लोकः । जन इति जनोलोकः । तप इति तपोलोकः । सत्यमिति सत्यलोकः। तदिति तदसौ तेजोमय तेजोऽग्निर्देवता । सवितुरिति सविता सावित्रमादित्यो वै । वरेण्यमित्यत्र प्रजापतिः । भर्ग इत्यापो वै भर्गः । देवस्य इतीन्द्रो देवो द्योतत इति स इन्द्रस्तस्मात् सर्वपुरुषो नाम रुद्रः । धीमहीत्यन्तरात्मा । धिय इत्यन्तरात्मा परः । य इति सदाशिवपुरुषः । नो इत्यस्माकं स्वधर्मे । प्रचोदयादिति प्रचोदित काम इमान् लोकान् प्रत्याश्रयते यः परो धर्म इत्येषा गायत्री । सा च किं गोत्रा कत्यक्षरा कतिपादा । कति कुक्षयः । कानि शीर्षाणि । सांख्यायनगोत्रा स चतुर्विंशत्यक्षरा गायत्री त्रिपादा चतुष्पादा । पुनस्तस्याश्चत्वारः पादाः षट् कुक्षिकाः पञ्च शीर्षाणि भवन्ति । के च पादाः काश्च कुक्षयः कानि शीर्षाणि । ऋग्वेदोऽस्याः प्रथमः पादो भवति। यजुर्वेदो द्वितीयः पादः। सामवेदस्तृतीयः पादः । अथर्ववेदश्चतुर्थः पादः । पूर्वा दिक् प्रथमा कुक्षिर्भवति। दक्षिणा द्वितीया कुक्षिर्भवति। पश्चिमा तृतीया कुक्षिर्भवति । उत्तरा चतुर्थी कुक्षिर्भवति। ऊर्ध्वं पञ्चमी कुक्षिर्भवति । अधः षष्ठी कुक्षिर्भवति । व्याकरणोऽस्याः प्रथमः शीर्षो भवति । शिक्षा द्वितीयः। कल्पस्तृतीयः। निरुक्तश्चतुर्थः। ज्योतिषामयनमिति पञ्चमः। का दिक् को वर्णः किमायतनं कः स्वरः किं लक्षणम्। कानि अक्षरदैवतानि क ऋषयः कानि च्हन्दांसि का शक्तयः कानि तत्त्वानि के चावयवाः । पूर्वायां भवतु गायत्री । मध्यमायां भवतु सावित्री । पश्चिमायां भवतु सरस्वती । रक्ता गायत्री । श्वेता सावित्री । कृष्णा सरस्वती । पृथिव्यन्तरिक्षं द्यौरायतनानि ।

अकारोकारमकाररूपोदात्तादिस्वरात्मिका । पूर्वा सन्ध्या हंसवाहिनी ब्राह्मी । मध्यमा वृषभवाहिनी माहेश्वरी । पश्चिमा गरुडवाहिनी वैष्णवी । पूर्वाह्णकालिका सन्ध्या गायत्री कुमारी रक्ता रक्ताङ्गी रक्तवासिनी रक्तगन्धमाल्यानुलेपनी पाशाकुशाङ्क्षमालाकमण्डलुव रहस्ता हंसारूढा ब्रह्मदैवत्या ऋग्वेदसहिता आदित्यपथगामिनी भूमण्डलवासिनी । मध्याह्नकालिका सन्ध्या सावित्री युवती श्वेताङ्गी श्वेतवासिनीश्वेतगन्धमाल्यानुलेपनी त्रिशूलडमरुहस्ता वृषभारूढा रुद्रदैवत्यायजुर्वेदसहिता आदित्यपथगामिनी भुवोलोके व्यवस्थिता । सायं सन्ध्या सरस्वती वृद्धा

कृष्णाङ्गी कृष्णवासिनी कृष्णगन्धमाल्यानुलेपना शङ्खचक्रगदाभयहस्ता गरुडारूढा विष्णुदैवत्या सामवेदसहिता आदित्यपथगामिनी स्वर्गलोकव्यवस्थिता। अग्निवायुसूर्य रूपावहनीयगार्हपत्यदक्षिणाग्निरूपा ऋग्यजु सामरूपा भूर्भुवःस्वरिति व्याहृतिरूपा प्रातर्मध्याह्न तृतीय सवनात्मिका सत्त्वरजस्तमोगुणात्मिका जाग्रत्स्वप्न सुषुप्त रूपा वसुरुद्रादित्यरूपा गायत्रीत्रिष्टुब्जगतीरूपा ब्रह्मशङ्करविष्णु रूपेच्च्हाज्ञानक्रियाशक्तिरूपा स्वराड्विराड्वषड्ब्रह्मरूपेति | प्रथममाग्नेयं द्वितीयं प्राजापत्यं तृतीयं सौम्यं चतुर्थमीशानं पञ्चममादित्यं षष्ठं गार्हपत्यं सप्तमं मैत्रमष्टमं भगदैवतं नवममार्यमणं दशमं सावित्रमेकादशं त्वाष्ट्रं द्वादशं पौष्णं त्रयोदशमैद्राग्नं चतुर्दशं वायव्यं पञ्चदशं वामदेवं षोडषं मैत्रावरुणं सप्तदशं भ्रातृव्यमष्टादशं वैष्णवमेकोनविंशं वामनं विंशं वैश्वदेवमेकविंशं रौद्रं द्वाविंशं कौबेरं त्रयोविंशमाश्विनं चतुर्विंशं ब्राह्ममिति प्रत्यक्षरदैवतानि । प्रथमं वासिष्ठं द्वितीयं भारद्वाजं तृतीयं गार्ग्यं चतुर्थमुप- मन्यवं पञ्चमं भार्गवं षष्ठं शाण्डिल्यं सप्तमं लोहितमाष्टमं वैष्णवं नवमं शातातपं दशमं सनतकुमारमेकादशं वेदव्यासं द्वादशं शुकं त्रयोदशं पाराशर्यं चतुर्दशं पौण्ड्रकं पञ्चदशं क्रतुं षोडशं दाक्षं सप्तदशं काश्यपमष्टादशमात्रेयम् एकोन विंशमगस्त्यं विंशमौद्दालकमेकविंशमाङ्गिरसं द्वाविंशं नामिकेतुं त्रयोविंशं मौद्गल्यं चतुर्विंशमाङ्गिरस वैश्वामित्र मिति प्रत्यक्षराणामृषयो भवन्ति । गायत्री त्रिष्टुब्जगत्यनुष्टुप्क्षद्रपङ्क्ति बृहत्युष्णिगदितिरिति त्रिरावृत्तेन च्हन्दांसि प्रतिपाद्यन्ते । प्रह्लादिनी प्रज्ञाविश्वभद्रा विलासिनी प्रभा शान्ता मा कान्ति स्पर्शा दुर्गा सरस्वती विरूपा विशालाक्षी शालिनी व्यापिनी विमला तमोऽपहारिणीसूक्ष्मावयवा पद्मालया विरजा विश्वरूपा भद्रा कृपासर्वतोमुखीति चतुर्विंशतिशक्तयो निगद्यन्ते । पृथिव्यप्तेजो वाय्वाकाशगन्धरसरूपस्पर्श शब्दवाक्यानि पादपायूपस्थत्वक्क्ष द्रचक्षुश्रोत्र जिह्वाघ्राणमनोबुद्ध्य हङ्कार चित्तज्ञानानीति प्रत्यक्षराणां तत्त्वानि प्रतीयन्ते । चम्पकातसी कुङ्कुमपिङ्गलेन्द्र नीलाग्निप्रभोद्यत्सूर्य विद्युत्तार कसरोजगौरमरतकशुक्ल कुन्दे न्दुशङ्खपाण्डुनेत्र नीलोत्पलचन्दनागुरुकस्तूरी गोरोचन घनसारसन्निभं प्रत्यक्षरमनुस्म्रृत्य समस्तपात कोपपातकमहापातका गम्यागमनगोहत्या ब्रह्महत्या भ्रूणहत्यावी रहत्या पुरुषहत्याऽजन्मकृतहत्यास्त्रीहत्या गुरुहत्या पितृहत्या प्राणहत्या चराचरहत्याऽ भक्ष्यभक्षणप्रतिग्रह स्वकर्म विच्च्हेदन स्वाम्यार्तिहीन कर्मकरणपरधनापहरण शूद्रान्न भोजनशत्रुमारण चण्डालीगमनादिसमस्त पापहरणार्थं संस्मरेत् । मूर्धा ब्रह्मा शिखान्तो विष्णुर्ललाटं रुद्रचक्षुषी चन्द्रादित्यौ कर्णौ शुक्रबृहस्पती नासापुटे अश्विनौ दन्तोष्ठावुभे सन्ध्ये मुखं मरुतः स्तनौ वस्वादयो हृदयं पर्जन्य उदरमाकाशो नाभिरग्निः कटिरिन्द्राग्नी जघनं प्राजापत्यमूरू कैलासमूलं जानुनी विश्वेदेवौ जङ्घे शिशिरः गुल्फानि पृथिवीवनस्पत्यादीनि नखानि महती अस्थीनि नवग्रहा असृक्केतुर्मांसमृतुसन्धयः काल द्वयास्फालनं संवत्सरो निमेषोऽहोरात्रमिति वाग्देवीं गायत्रीं शरणमहं प्रपद्ये । य इदं गायत्रीरहस्यमधीते तेन क्रतुसहस्रमिष्टं भवति । य इदं गायत्रीरहस्यमधीते दिवसकृतं पापं नाशयति । प्रातरमध्याह्नयोः षण्मासकृतानि पापानि नाशयति । सायं प्रातरधीयानो जन्मकृतं पापं नाशयति । य इदं गायत्रीरहस्यं ब्राह्मणः पठेत् तेन गायत्र्याः षष्टिसहस्रलक्षाणि जप्तानि भवन्ति । सर्वान् वेदानधीतो भवति । सर्वेषु तीर्थेषु स्नातो भवति । अपेयपानात् पूतो भवति । अभक्ष्यभक्षणात् पूतो भवति। वृषलीगमनात् पूतो भवति। अब्रह्मचारी ब्रह्मचारी भवति । पङ्क्तिषु सहस्रपानात् पूतो भवति । अष्टौ ब्राह्मणान् ग्राहयित्वा ब्रह्मलोकं स गच्च्हति । इत्याह भगवान्ब्रह्मा॥ इति गायत्रीरहस्योपनिषत् समाप्ता ॥

# गायत्री मन्त्रार्थः सार्थ

अथ सर्वदेवात्मनः सर्वशक्तेः सर्वावभासकतेजोमयस्य परमात्मनः सर्वात्मकत्वद्योतनार्थं सर्वात्मकत्वप्रतिपादक गायत्रीमहामन्त्रस्योपासनप्रकारः प्रकाश्यते । तत्र गायत्रीं प्रणवादिसप्तव्याहृत्युपेतां शिरःसमेतां सर्ववेदसारमिति वदन्ति।, एवंविशिष्टा गायत्री प्राणायामैरुपास्या । सप्रणव व्याहृतित्रयोपेता प्रणवान्ता गायत्री जपादिभिरुपास्या ।

तत्र शुद्धगायत्री प्रत्यग्ब्रह्मैक्यबोधिका । धियो यो नः प्रचोदयादिति नः अस्माकं धियः बुद्धिः यः प्रचोदयात् प्रेरयेत् इति सर्वबुद्धि संज्ञान्तःकरणप्रकाशकः सर्वसाक्षी प्रत्यगात्मा उच्यते । तस्य प्रचोदयाच्छब्दनिर्दिष्टस्यात्मनः स्वरूपभूतं परं ब्रह्म तत्सवितुरित्यादिपदैर्निर्दिश्यते ।

तत्र "ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधःस्मृतः " इति तच्छब्देन प्रत्यग्भूतं स्वतःसिद्धं परं ब्रह्मोच्यते । सवितुरिति सृष्टिस्थितिलय लक्षणकस्य सर्वप्रपञ्चस्य समस्तद्वैतविभ्रमस्याधिष्ठानं लक्ष्यते । वरेण्यमिति सर्ववरणीयं निरतिशयानन्दरूपम् । भर्ग इत्यविद्यादि दोषभर्जनात्मकज्ञानैकविषयम् । देवस्येति सर्वद्योतनात्मकाखण्ड चिदेकरसम् । सवितुर्देवस्येत्यत्र षष्ठ्यर्थो राहोः शिर इतिवदौपचारिकः बुद्ध्यादिसर्वदृश्यसाक्षिलक्षणं यन्मे स्वरूपं तत्सर्वाधिष्ठानभूतं परमानन्दं निरस्तसमस्तानर्थरूपं स्वप्रकाशचिदात्मकं ब्रह्मेत्येवं धीमहि ध्यायेम ।

एवं सति सह ब्रह्मणा स्वविवर्तजडप्रपञ्चस्य रज्जुसर्पन्यायेन अपवाद सामानाधिकरण्यरूपमेकत्वं।, सोऽयमिति न्यायेन सर्वसाक्षिप्रत्यगात्मनो ब्रह्मणा सह तादात्म्यरूपमेकत्वं भवतीति सर्वात्मकब्रह्मबोधकोऽयं गायत्रीमन्त्रः संपद्यते ।

सप्तव्याहृतिनामयमर्थःभूरिति सन्मात्रमुच्यते भुव इति सर्वं भावयति प्रकाशयतीति व्युत्पत्त्या चिद्रूपमुच्यते । सुव्रियत इति व्युत्पत्त्या सुष्ठु सर्वैर्व्रियमाणसुखस्वरूपमुच्यते । मह इति महीयते पूज्यत इति व्युत्पत्त्या सर्वातिशयत्वमुच्यते । जन इतिजनयतीति जनः। सकल कारणत्वमुच्यते । तप इति सर्वतेजोरूपत्वम् । सत्यमिति सर्वबाधरहितम् । एतदुक्तं भवतियल्लोके सद्रूपं तदोंकारवाच्यं ब्रह्मैव। आत्मनोऽस्य सच्चिद्रूपस्वभावादिति । अथ भूरादयः सर्वलोका ओंकारावाच्य ब्रह्मात्मकाः। न तद्व्यतिरिक्तं किंचिदस्तीति व्याहृतयोऽपि सर्वात्मक ब्रह्मबोधिकाः।

गायत्रीशिरसोऽप्ययमेवार्थः आप इत्याप्नोतीति व्युत्पत्त्या व्यापित्वमुच्यते ज्योतिरिति प्रकाशरूपत्वम् । रस इति सर्वातिशयत्वम् । अमृतमिति मरणादि संसारनिर्मुक्तत्वम् । सर्वव्यापिसर्वप्रकाशकसर्वोत्कृष्टनित्यमुक्तमात्मरूपं सच्चिदात्मकं यदोंकारवाच्यं ब्रह्म तदहमस्मि ।

इति गायत्रीमन्त्रस्यार्थः ।
गुहाशयब्रह्महुताशनोऽहं कर्त्रेदमंशाख्य हविर्हुतं सत।
विलीयते नेदमहं भवानी त्येष प्रकारस्तु विभिद्यतेऽत्र ॥
यदस्ति यद्भाति तदात्मरूपं नान्यत्ततो भाति न चान्यदस्ति ।
स्वभावसंवित्प्रविभाति केवला ग्राह्यं ग्रहीतेति मृषैव कल्पना ॥

# श्री गायत्री दिव्य सहस्रनाम स्तोत्रम्

श्रीगणेशाय नमः ।

ध्यानम्

रक्तश्वेतहिरण्यनीलधवलैर्युक्तां त्रिनेत्रोज्ज्वलां
रक्तारक्तनवस्रजं मणिगणैर्युक्तां कुमारीमिमाम्।
गायत्री कमलासनां करतलव्यानद्धकुण्डाम्बुजां
पद्माक्षीं च वरस्रजञ्च दधतीं हंसाधिरूढां भजे॥
ॐ तत्काररूपा तत्वज्ञा तत्पदार्थस्वरूपिणि ।
तपस्स्व्याध्यायनिरता तपस्विजननन्नुता ॥१॥
तत्कीर्तिगुणसम्पन्ना तथ्यवाक्च तपोनिधिः।
तत्वोपदेशसम्बन्धा तपोलोकनिवासिनी ॥२॥
तरुणादित्यसङ्काशा तप्तकाञ्चनभूषणा ।
तमोपहारिणि तन्त्री तारिणिताररूपिणि ॥३॥
तलादिभुवनान्तस्था तर्कशास्त्रविधायिनी ।
तन्त्रसारा तन्त्रमाता तन्त्रमार्गप्रदर्शिनी ॥४॥
तत्वा तन्त्रविधानज्ञा तन्त्रस्था तन्त्रसाक्षिणि ।
तदेकध्याननिरता तत्वज्ञानप्रबोधिनी ॥५॥
तन्नाममन्त्रसुप्रीता तपस्विजनसेविता ।
साकाररूपा सावित्री सर्वरूपा सनातनी ॥६॥
संसारदुःखशमनी सर्वयागफलप्रदा ।
सकला सत्यसङ्कल्पा सत्या सत्यप्रदायिनी ॥७॥
सन्तोषजननी सारा सत्यलोकनिवासिनी ।
समुद्रतनयाराध्या सामगानप्रिया सती ॥८॥
समानी सामदेवी च समस्तसुरसेविता ।
सर्वसम्पत्तिजननी सद्गुणा सकलेष्टदा ॥९॥
सनकादिमुनिध्येया समानाधिकवर्जिता ।
साध्या सिद्धा सुधावासा सिद्धिस्साध्यप्रदायिनी ॥१०॥
सद्युगाराध्यनिलया समुत्तीर्णा सदाशिवा ।
सर्ववेदान्तनिलया सर्वशास्त्रार्थगोचरा ॥११॥
सहस्रदलपद्मस्था सर्वज्ञा सर्वतोमुखी ।
समया समयाचारा सदसद्ग्रन्थिभेदिनी ॥१२॥
सप्तकोटिमहामन्त्रमाता सर्वप्रदायिनी ।
सगुणा सम्भ्रमा साक्षी सर्वचैतन्यरूपिणी ॥१३॥
सत्कीर्तिस्सात्विका साध्वी सच्चिदानन्दरूपिणी ।
सङ्कल्परूपिणी सन्ध्या सालग्रामनिवासिनी ॥१४॥
सर्वोपाधिविनिर्मुक्ता सत्यज्ञानप्रबोधिनी ।
विकाररूपा विप्रश्रीर्विप्राराधनतत्परा ॥१५॥
विप्रप्रीर्विप्रकल्याणी विप्रवाक्यस्वरूपिणी ।
विप्रमन्दिरमध्यस्था विप्रवादविनोदिनी ॥१६॥
विप्रोपाधिविनिर्भेत्री विप्रहत्याविमोचनी ।
विप्रत्राता विप्रगोत्रा विप्रगोत्रविवर्धिनी ॥१७॥
विप्रभोजनसन्तुष्टा विष्णुरूपा विनोदिनी ।
विष्णुमाया विष्णुवन्द्या विष्णुगर्भा विचित्रिणी ॥१८॥
वैष्णवी विष्णुभगिनी विष्णुमायाविलासिनी ।
विकाररहिता विश्वविज्ञानघनरूपिणी ॥१९॥
विबुधा विष्णुसङ्कल्पा विश्वामित्रप्रसादिनी ।
विष्णुचैतन्यनिलया विष्णुस्वा विश्वसाक्षिणी ॥२०॥
विवेकिनी वियद्रूपा विजया विश्वमोहिनी ।
विद्याधरी विधानज्ञा वेदतत्वार्थरूपिणी ॥२१॥
विरूपाक्षी विराड्रूपा विक्रमा विश्वमङ्गला ।
विश्वम्भरासमाराध्या विश्वभ्रमणकारिणी ॥२२॥
विनायकी विनोदस्था वीरगोष्ठीविवर्धिनी ।
विवाहरहिता विन्ध्या विन्ध्याचलनिवासिनी ॥२३॥
विद्याविद्याकरी विद्या विद्याविद्याप्रबोधिनी ।
विमला विभवा वेद्या विश्वस्था विविधोज्ज्वला ॥२४॥
वीरमध्या वरारोहा वितन्त्रा विश्वनायिका ।
वीरहत्याप्रशमनी विनम्रजनपालिनी ॥२५॥
वीरधीर्विविधाकारा विरोधिजननाशिनी ।
तुकाररूपा तुर्यश्रीस्तुलसीवनवासिनी ॥२६॥
तुरङ्गी तुरगारूढा तुलादानफलप्रदा ।
तुलामाघस्नानतुष्टा तुष्टिपुष्टिप्रदायिनी ॥२७॥
तुरङ्गमप्रसन्तुष्टा तुलिता तुल्यमध्यगा ।
तुङ्गोत्तुङ्गा तुङ्गकुचा तुहिनाचलसंस्थिता ॥२८॥
तुम्बुरादिस्तुतिप्रीता तुषारशिखरीश्वरी ।
तुष्टा च तुष्टिजननी तुष्टलोकनिवासिनी ॥२९॥
तुलाधारा तुलामध्या तुलस्था तुर्यरूपिणी ।
तुरीयगुणगम्भीरा तुर्यनादस्वरूपिणी ॥३०॥
तुर्यविद्यालास्यतुष्टा तूर्यशास्त्रार्थवादिनी ।
तुरीयशास्त्रतत्वज्ञा तूर्यनादविनोदिनी ॥३१॥
तूर्यनादान्तनिलया तूर्यानन्दस्वरूपिणी ।
तुरीयभक्तिजननी तुर्यमार्गप्रदर्शिनी ॥३२॥

वकाररूपा वागीशी वरेण्या वरसंविधा ।
वरा वरिष्ठा वैदेही वेदशास्त्रप्रदर्शिनी ॥३३॥
विकल्पशमनी वाणी वाञ्छितार्थफलप्रदा ।
वयस्था च वयोमध्या वयोवस्थाविवर्जिता ॥३४॥
वन्दिनी वादिनी वर्या वाङ्मयी वीरवन्दिता ।
वानप्रस्थाश्रमस्था च वनदुर्गा वनालया ॥३५॥
वनजाक्षी वनचरी वनिता विश्वमोहिनी ।
वसिष्ठावामदेवादिवन्द्या वन्द्यस्वरूपिणी ॥३६॥
वैद्या वैद्यचिकित्सा च वषट्कारी वसुन्धरा ।
वसुमाता वसुत्राता वसुजन्मविमोचनी ॥३७॥
वसुप्रदा वासुदेवी वासुदेव मनोहरी ।
वासवार्चितपादश्रीर्वासवारिविनाशिनी ॥३८॥
वागीशी वाङ्मनस्थायी वशिनी वनवासभूः ।
वामदेवी वरारोहा वाद्यघोषणतत्परा ॥३९॥
वाचस्पतिसमाराध्या वेदमाता विनोदिनी ।
रेकाररूपा रेवा च रेवातीरनिवासिनी ॥४०॥
राजीवलोचना रामा रागिणिरतिवन्दिता ।
रमणीरामजप्ता च राज्यपा राजताद्रिगा ॥४१॥
राकिणी रेवती रक्षा रुद्रजन्मा रजस्वला ।
रेणुकारमणी रम्या रतिवृद्धा रता रतिः ॥४२॥
रावणानन्दसन्धायी राजश्री राजशेखरी ।
रणमद्या रथारूढा रविकोटिसमप्रभा ॥४३॥
रविमण्डलमध्यस्था रजनी रविलोचना ।
रथाङ्गपाणि रक्षोघ्नी रागिणी रावणार्चिता ॥४४॥
रम्भादिकन्यकाराध्या राज्यदा राज्यवर्धिनी ।
रजताद्रीशसक्थिस्था रम्या राजीवलोचना ॥४५॥
रम्यवाणी रमाराध्या राज्यधात्री रतोत्सवा ।
रेवती च रतोत्साहा राजहृद्रोगहारिणी ॥४६॥
रङ्गप्रवृद्धमधुरा रङ्गमण्डपमध्यगा ।
रञ्जिता राजजननी रम्या राकेन्दुमध्यगा ॥४७॥
राविणी रागिणी रञ्ज्या राजराजेश्वरार्चिता ।
राजन्वती राजनीती रजताचलवासिनी ॥४८॥
राघवार्चितपादश्री राघवा राघवप्रिया ।
रत्ननूपुरमध्याढ्या रत्नद्वीपनिवासिनी ॥४९॥
रत्नप्राकारमध्यस्था रत्नमण्डपमध्यगा ।
रत्नाभिषेकसन्तुष्टा रत्नाङ्गी रत्नदायिनी ॥५०॥
णिकाररूपिणी नित्या नित्यतृप्ता निरञ्जना ।
निद्रात्ययविशेषज्ञा नीलजीमूतसन्निभा ॥५१॥
नीवारशूकवत्तन्वी नित्यकल्याणरूपिणी ।
नित्योत्सवा नित्यपूज्या नित्यानन्दस्वरूपिणी ॥५२॥
निर्विकल्पा निर्गुणस्था निश्चिन्ता निरुपद्रवा ।
निस्संशया निरीहा च निर्लोभा नीलमूर्धजा ॥५३॥
निखिलागममध्यस्था निखिलागमसंस्थिता ।
नित्योपाधिविनिर्मुक्ता नित्यकर्मफलप्रदा ॥५४॥
नीलग्रीवा निराहारा निरञ्जनवरप्रदा ।
नवनीतप्रिया नारी नरकार्णवतारिणी ॥५५॥
नारायणी निरीहा च निर्मला निर्गुणप्रिया ।
निश्चिन्ता निगमाचारनिखिलागम च वेदिनी ॥५६॥
निमेषानिमिषोत्पन्ना निमेषाण्डविधायिनी ।
निवातदीपमध्यस्था निर्विघ्ना नीचनाशिनी ॥५७॥
नीलवेणी नीलखण्डा निर्विषा निष्कशोभिता ।
नीलांशुकपरीधाना निन्दघ्नी च निरीश्वरी ॥५८॥
निश्वासोच्छ्वासमध्यस्था नित्ययानविलासिनी ।
यङ्काररूपा यन्त्रेशी यन्त्री यन्त्रयशस्विनी ॥५९॥
यन्त्राराधनसन्तुष्टा यजमानस्वरूपिणी ।
योगिपूज्या यकारस्था यूपस्तम्भनिवासिनी ॥६०॥
यमघ्नी यमकल्पा च यशःकामा यतीश्वरी ।
यमादीयोगनिरता यतिदुःखापहारिणी ॥६१॥
यज्ञा यज्वा यजुर्गेया यज्ञेश्वरपतिव्रता ।
यज्ञसूत्रप्रदा यष्ट्री यज्ञकर्मफलप्रदा ॥६२॥
यवाङ्कुरप्रिया यन्त्री यवदघ्नी यवार्चिता ।
यज्ञकर्ती यज्ञभोक्त्री यज्ञाङ्गी यज्ञवाहिनी ॥६३॥
यज्ञसाक्षी यज्ञमुखी यजुषी यज्ञरक्षिणी ।
भकाररूपा भद्रेशी भद्रकल्याणदायिनी ॥६४॥
भक्तप्रिया भक्तसखा भक्ताभीष्टस्वरूपिणी ।
भगिनी भक्तसुलभा भक्तिदा भक्तवत्सला ॥६५॥
भक्तचैतन्यनिलया भक्तबन्धविमोचनी ।
भक्तस्वरूपिणी भाग्या भक्तारोग्यप्रदायिनी ॥६६॥
भक्तमाता भक्तगम्या भक्ताभीष्टप्रदायिनी ।
भास्करी भैरवी भोग्या भवानी भयनाशिनी ॥६७॥
भद्रात्मिका भद्रदायी भद्रकाली भयङ्करी ।
भगनिष्यन्दिनी भूम्नी भवबन्धविमोचनी ॥६८॥
भीमा भवसखा भङ्गीभङ्गुरा भीमदर्शिनी ।
भल्ली भल्लीधरा भीरुर्भेरुण्डा भीमपापहा ॥६९॥

भावज्ञा भोगदात्री च भवघ्नी भूतिभूषणा ।
भूतिदा भूमिदात्री च भूपतित्वप्रदायिनी ॥७०॥
भ्रामरी भ्रमरी भारी भवसागरतारिणी ।
भण्डासुरवधोत्साहा भाग्यदा भावमोदिनी ॥७१॥
गोकाररूपा गोमाता गुरुपत्नी गुरुप्रिया ।
गोरोचनप्रिया गौरी गोविन्दगुणवर्धिनी ॥७२॥
गोपालचेष्टासन्तुष्टा गोवर्धनविवर्धिनी ।
गोविन्दरूपिणी गोप्त्री गोकुलानांविवर्धिनी ॥७३॥
गीता गीतप्रिया गेया गोदा गोरूपधारिणी ।
गोपी गोहत्यशमनी गुणिनी गुणिविग्रहा ॥७४॥
गोविन्दजननी गोष्ठा गोप्रदा गोकुलोत्सवा ।
गोचरी गौतमी गङ्गा गोमुखी गुणवासिनी ॥७५॥
गोपाली गोमया गुम्भा गोष्ठी गोपुरवासिनी ।
गरुडा गमनश्रेष्ठा गारुडा गरुडध्वजा ॥७६॥
गम्भीरा गण्डकी गुण्डा गरुडध्वजवल्लभा ।
गगनस्था गयावासा गुणवृत्तिर्गुणोद्भवा ॥७७॥
देकाररूपा देवेशी दृग्रूपा देवतार्चिता ।
देवराजेश्वरार्धाङ्गी दीनदैन्यविमोचनी ॥७८॥
देकालपरिज्ञाना देशोपद्रवनाशिनी ।
देवमाता देवमोहा देवदानवमोहिनी ॥७९॥
देवेन्द्रार्चितपादश्री देवदेवप्रसादिनी ।
देशान्तरी देशरूपा देवालयनिवासिनी ॥८०॥
देशभ्रमणसन्तुष्टा देशस्वास्थ्यप्रदायिनी ।
देवयाना देवता च देवसैन्यप्रपालिनी ॥८१॥
वकाररूपा वाग्देवी वेदमानसगोचरा ।
वैकुण्ठदेशिका वेद्या वायुरूपा वरप्रदा ॥८२॥
वक्रतुण्डार्चितपदा वक्रतुण्डप्रसादिनी ।
वैचित्र्यरूपा वसुधा वसुस्थाना वसुप्रिया ॥८३॥
वषट्कारस्वरूपा च वरारोहा वरासना ।
वैदेही जननी वेद्या वैदेहीशोकनाशिनी ॥८४॥
वेदमाता वेदकन्या वेदरूपा विनोदिनी ।
वेदान्तवादिनी चैव वेदान्तनिलयप्रिया ॥८५॥
वेदश्रवा वेदघोषा वेदगीता विनोदिनी ।
वेदशास्त्रार्थतत्वज्ञा वेदमार्ग प्रदर्शिनी ॥८६॥
वैदिकीकर्मफलदा वेदसागरवाडवा ।
वेदवन्द्या वेदगुह्या वेदाश्वरथवाहिनी ॥८७॥
वेदचक्रा वेदवन्द्या वेदाङ्गी वेदवित्कविः ।
सकाररूपा सामन्ता सामगान विचक्षणा ॥८८॥
साम्राज्ञी नामरूपा च सदानन्दप्रदायिनी ।
सर्वदृक्सन्निविष्टा च सर्वसम्प्रेषिणीसहा ॥८९॥
सव्यापसव्यदा सव्यसध्रीची च सहायिनी ।
सकला सागरा सारा सार्वभौमस्वरूपिणी ॥९०॥
सन्तोषजननी सेव्या सर्वेशी सर्वरञ्जनी ।
सरस्वती समाराध्या सामदा सिन्धुसेविता ॥९१॥
सम्मोहिनी सदामोहा सर्वमाङ्गल्यदायिनी ।
समस्तभुवनेशानी सर्वकामफलप्रदा ॥९२॥
सर्वसिद्धिप्रदा साध्वी सर्वज्ञानप्रदायिनी ।
सर्वदारिद्र्यशमनी सर्वदुःखविमोचनी ॥९३॥
सर्वरोगप्रशमनी सर्वपापविमोचनी ।
समदृष्टिस्समगुणा सर्वगोप्त्री सहायिनी ॥९४॥
सामर्थ्यवाहिनि साङ्ख्या सान्द्रानन्दपयोधरा ।
सङ्कीर्णमन्दिरस्थाना साकेतकुलपालिनी ॥९५॥
संहारिणी सुधारूपा साकेतपुरवासिनी ।
सम्बोधिनी समस्तेशी सत्यज्ञानस्वरूपिणी ॥९६॥
सम्पत्करी समानाङ्गी सर्वभावसुसंस्थिता ।
सन्ध्यावन्दनसुप्रीता सन्मार्गकुलपालिनी ॥९७॥
सञ्जीविनी सर्वमेधा सभ्या साधुसुपूजिता ।
समिद्धा सामिधेनी च सामान्या सामवेदिनी ॥९८॥
समुत्तीर्णा सदाचारा संहारा सर्वपावनी ।
सर्पिणी सर्पमाता च समादानसुखप्रदा ॥९९॥
सर्वरोगप्रशमनी सर्वज्ञत्वफलप्रदा ।
सङ्क्रमा समदा सिन्धुः सर्गादिकरणक्षमा ॥१००॥
सङ्कटा सङ्कटहरा सकुङ्कुमविलेपना ।
सुमुखा सुमुखप्रीता समानाधिकवर्जिता ॥१०१॥
संस्तुता स्तुतिसुप्रीता सत्यवादी सदास्पदा ।
धीकाररूपा धीमाता धीरा धीरप्रसादिनी ॥१०२॥
धीरोत्तमा धीरधीरा धीरस्था धीरशेखरा ।
धृतिरूपा धनाढ्या च धनपा धनदायिनी ॥१०३॥
धीरूपा धीरवन्द्या च धीप्रभा धीरमानसा ।
धीगेया धीपदस्था च धीशाना धीप्रसादिनी ॥१०४॥
मकाररूपा मैत्रेया महामङ्गलदेवता ।
मनोवैकल्यशमनी मलयाचलवासिनी ॥१०५॥
मलयध्वजराजश्रीर्मायामोहविभेदिनी ।
महादेवी महारूपा महाभैरवपूजिता ॥१०६॥

मनुप्रीता मन्त्रमूर्तिर्मन्त्रवश्या महेश्वरी ।
मत्तमातङ्गगमना मधुरा मेरुमण्टपा ॥१०७॥
महागुप्ता महाभूता महाभयविनाशिनी ।
महाशौर्या मन्त्रिणी च महावैरिविनाशिनी ॥१०८॥
महालक्ष्मीर्महागौरी महिषासुरमर्दिनी ।
मही च मण्डलस्था च मधुरागमपूजिता ॥१०९॥
मेधा मेधाकरी मेध्या माधवी मधुमर्धिनी ।
मन्त्रा मन्त्रमयी मान्या माया माधवमन्त्रिणी ॥११०॥
मायादूरा च मायावी मायाज्ञा मानदायिनी ।
मायासङ्कल्पजननी मायामायविनोदिनी ॥१११॥
माया प्रपञ्चशमनी मायासंहाररूपिणी ।
मायामन्त्रप्रसादा च मायाजनविमोहिनी ॥११२॥
महापथा महाभोगा महविघ्नविनाशिनी ।
महानुभावा मन्त्राढ्या महमङ्गलदेवता ॥११३॥
हिकाररूपा हृद्या च हितकार्यप्रवर्धिनी ।
हेयोपाधिविनिर्मुक्ता हीनलोकविनाशिनी ॥११४॥
ह्रींकारी ह्रीमती हृद्या ह्रीं देवी ह्रीं स्वभाविनी ।
ह्रीं मन्दिरा हितकरा हृष्टा च ह्रीं कुलोद्भवा ॥११५॥
हितप्रज्ञा हितप्रीता हितकारुण्यवर्धिनी ।
हितासिनी हितक्रोधा हितकर्मफलप्रदा ॥११६॥
हिमा हैमवती हैम्नी हेमाचलनिवासिनी ।
हिमागजा हितकरी हितकर्मस्वभाविनी ॥११७॥
धीकाररूपा धिषणा धर्मरूपा धनेश्वरी ।
धनुर्धरा धराधारा धर्मकर्मफलप्रदा ॥११८॥
धर्माचारा धर्मसारा धर्ममध्यनिवासिनी ।
धनुर्विद्या धनुर्वेदा धन्या धूर्तविनाशिनी ॥११९॥
धनधान्याधेनुरूपा धनाढ्या धनदायिनी ।
धनेशी धर्मनिरता धर्मराजप्रसादिनी ॥१२०॥
धर्मस्वरूपा धर्मेशी धर्माधर्मविचारिणी ।
धर्मसूक्ष्मा धर्मगेहा धर्मिष्ठा धर्मगोचरा ॥१२१॥
योकाररूपा योगेशी योगस्था योगरूपिणी ।
योग्या योगीशवरदा योगमार्गनिवासिनी ॥१२२॥
योगासनस्था योगेशी योगमायाविलासिनी ।
योगिनी योगरक्ता च योगाङ्गी योगविग्रहा ॥१२३॥
योगवासा योगभाग्या योगमार्गप्रदर्शिनी ।
योकाररूपा योधाढ्यायोध्री योधसुतत्परा ॥१२४॥
योगिनी योगिनीसेव्या योगज्ञानप्रबोधिनी ।
योगेश्वरप्राणानाथा योगीश्वरहृदिस्थिता ॥१२५॥
योगा योगक्षेमकर्त्री योगक्षेमविधायिनी ।
योगराजेश्वराराध्या योगानन्दस्वरूपिणी ॥१२६॥
नकाररूपा नादेशी नामपारायणप्रिया ।
नवसिद्धिसमाराध्या नारायणमनोहरी ॥१२७॥
नारायणी नवाधारा नवब्रह्मार्चितांघ्रिका ।
नगेन्द्रतनयाराध्या नामरूपविवर्जिता ॥१२८॥
नरसिंहार्चितपदा नवबन्धविमोचनी ।
नवग्रहार्चितपदा नवमीपूजनप्रिया ॥१२९॥
नैमित्तिकार्थफलदा नन्दितारिविनाशिनी ।
नवपीठस्थिता नादा नवर्षिगणसेविता ॥१३०॥
नवसूत्राविधानज्ञा नैमिशारण्यवासिनी ।
नवचन्दनदिग्धाङ्गी नवकुङ्कुमधारिणी ॥१३१॥
नववस्त्रपरीधाना नवरत्नविभूषणा ।
नव्यभस्मविदग्धाङ्गी नवचन्द्रकलाधरा ॥१३२॥
प्रकाररूपा प्राणेशी प्राणसंरक्षणीपरा ।
प्राणसञ्जीविनी प्राच्या प्राणिप्राणप्रबोधिनी ॥१३३॥
प्रज्ञा प्राज्ञा प्रभापुष्पा प्रतीची प्रभुदा प्रिया ।
प्राचीना प्राणिचित्तस्था प्रभा प्रज्ञानरूपिणी ॥१३४॥
प्रभातकर्मसन्तुष्टा प्राणायामपरायणा ।
प्रायज्ञा प्रणवा प्राणा प्रवृत्तिः प्रकृतिः परा ॥१३५॥
प्रबन्धा प्रथमा चैव प्रगा प्रारब्धनाशिनी ।
प्रबोधनिरता प्रेक्ष्या प्रबन्धा प्राणसाक्षिणी ॥१३६॥
प्रयागतीर्थनिलया प्रत्यक्षपरमेश्वरी ।
प्रणवाद्यन्तनिलया प्रणवादिः प्रजेश्वरी ॥१३७॥
चोकाररूपा चोरघ्नी चोरबाधाविनाशिनी ।
चैतन्यचेतनस्था च चतुरा च चमत्कृतिः ॥१३८॥
चक्रवर्तिकुलाधारा चक्रिणी चक्रधारिणी ।
चित्तचेया चिदानन्दा चिद्रूपा चिद्विलासिनी ॥१३९॥
चिन्ताचित्तप्रशमनी चिन्तितार्थफलप्रदा ।
चाम्पेयी चम्पकप्रीता चण्डी चण्डाट्टहासिनी ॥१४०॥
चण्डेश्वरी चण्डमाता चण्डमुण्डविनाशिनी ।
चकोराक्षी चिरप्रीता चिकुरा चिकुरालका ॥१४१॥
चैतन्यरूपिणी चैत्री चेतना चित्तसाक्षिणी ।
चित्रा चित्रविचित्राङ्गी चित्रगुप्तप्रसादिनी ॥१४२॥
चलना चक्रसंस्था च चाम्पेयी चलचित्रिणी ।
चन्द्रमण्डलमध्यस्था चन्द्रकोटिसुशीतला ॥१४३॥

